उत्तर प्रदेश एवं असम ने केन्द्र को बताया की धीमी गति के कारण १९९० तक ...न करना उनके लिए सम्भव नहीं ...एवं अन्य पिछड़े समुदायों के लड़कों ...ये जा रहे प्रोत्साहनों की शिक्षा ...लय ने सराहना की है। इसने ...फारिश की है कि अन्य राज्य भी ऐसा करें।

कई राज्यों ने कहा बताते हैं कि उन्हें अतिरिक्त शिक्षकों की नियुक्ति करने की आवश्यकता है। मणिपुर एवं मेघालय सहित कुछ राज्यों को विज्ञान के शिक्षकों की नियुक्ति करनी है तथा उन्होंने इसके लिए अतिरिक्त कोष की मांग की है।

कई राज्यों ने संकेत दिया है कि उन्हें विद्यालयों के लिए भवनों का निर्माण करने एवं उनके रख रखाव की व्यवस्था शीघ्र करने की आवश्यकता है।

## शिरोमणि गुरुद्वारा प्रबंधक कमेटी की मांग हास्यास्पद —भजनलाल

चण्डीगढ़, १४ अक्टूबर (प्रेस ट्र.)। ...रियाणा के मुख्य मंत्री श्री भजनलाल ...आज शिरोमणि गुरुद्वारा प्रबंधक ...मेटी की उस मांग को हास्यास्पद ...ताया है, जिसमें कमेटी यमुनानगर ...वं जगाधरी में हाल ही में हुई हिंसक ...टनाओं के कारण हरियाणा सरकार ...बर्खास्तगी की मांग की है। संवाद-...ताओं से यहां बातचीत करते हुए ...य मंत्री ने आरोप लगाया कि हिंसा-...क घटनायें 'बाहरी तत्वों' ने भड़-...यी जबकि हरियाणा सरकार द्वारा ...समय उठाये गये कदमों के फल-...रूप स्थिति को नियंत्रित किया जा ...। दोनों नगरों में स्थिति पूर्णतः



भारती (ज्ञान...) वासिष्ठ संग्रह

A-९९

५५३

॥ श्रीगुरुभ्यो नमः ॥

# ॥ श्रीवासिष्ठसंग्रहः ॥

श्री-शृङ्गगिरि-शारदापीठाधीश्वराणां जगदाचार्याणां अव्याजकरुणा-भाजनेन श्रीसदाशिवेन्द्रसरस्वतीपूज्यपादेभ्यो लब्धतुर्याश्रम-क्रमेण **श्रीज्ञानानन्दभारतीस्वामिना** संगृहीतः ।

श्री-शृङ्गगिरि-श्रीजगद्गुरुचरणैः सादरं अनुगृहीतेन **श्रीमुखेन** विभूषितः ।

श्रीरङ्गस्थेन आस्थानपण्डितेन
**श्री-वेङ्कटरामशास्त्रिणा** परिशोध्य

शृङ्गगिरि-श्रीजगद्गुरुसंस्थानद्वारा प्रकाशितः ।

श्रीरंगस्थ-श्रीवाणीविलासमुद्रणालये मुद्रापितः ।

1973

ॐ

## श्रीशृङ्गेरी जगद्गुरु महासंस्थानम्, शारदापीठम्

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य पदवाक्यप्रमाणपारावारपारीण यमनियमासन प्राणायाम प्रत्याहार धारणाध्यान समाध्यष्टाङ्ग योगानुष्ठाननिष्ठ तपश्चक्रवर्त्यनाद्यविच्छिन्न श्रीशङ्कराचार्य गुरुपरंपराप्राप्त षड्दर्शनस्थापनाचार्य व्याख्यान सिंहासनाधीश्वर सकलनिगमागमसारहृदय सांख्यत्रयप्रतिपादक वैदिकमार्गप्रवर्तक सर्वतन्त्रस्वतन्त्रादि राजधानी विद्यानगर महाराजधानी कर्णाटकसिंहासनप्रतिष्ठापनाचार्य श्रीमद्राजाधिराजगुरुभूमण्डलाचार्य ऋष्यशृङ्गपुरवराधीश्वर तुङ्गभद्रातीरवासि श्रीमद्विद्याशङ्कर पादपद्माराधक श्रीजगद्गुरु

**श्री चन्द्रशेखर भारती स्वामि**

गुरुकरकमलसञ्जात श्रीजगद्गुरु शृङ्गेरी

**श्रीमदभिनवविद्यातीर्थस्वामिभिः**

अनुगृहीतं

## ॥ श्रीमुखम् ॥

आध्यात्मिकाधिदैविकाधिभौतिकैः क्लेशैः अनुपद्रुतः न कश्चिदस्ति मानवः । बहुभिः आयासैः लौकिकीं भूयसीं संपत्तिं समार्ज्य नीतिमनुरुन्धानोऽपि व्यथाभिः कर्शितान्तरङ्गः

अवसीदतीत्येतदतिरोहितं विवेचकानाम् । सत्यां चास्यामवस्था-यां मानवं समुद्दिधीर्षुः श्रुतिः "तमेव विदित्वा अतिमृत्युमेति" इति सकलस्यापि दुःखजातस्य अत्यन्ते देवस्य प्रकाशमानस्य आत्मनः यथातथं स्वरूपावगममेव साधनमाह । स्वरूपावगमनं च श्रुत्यन्तानां सम्यक् परिशीलनेनैव स्वायत्तसाधनसंपदां केषांचिदेव प्राज्ञपुरुषधौरेयाणां भविष्यति ॥

सुकुमारमतयः दुरूहं आत्मतत्त्वं श्रुतिशिरोवचोभिरेव अवगन्तुं न प्रभवेयुः । अतः तादृशानपि अनुजिघृक्षुः मुनि-र्वाल्मीकिः सरसैः नैकैः कथाप्रपञ्चैः सरलं प्रपञ्चयामास । तस्य ग्रन्थस्य अभिधा "श्रीयोगवासिष्ठः" इति । स च अर्थतः शब्दतश्च अत्यन्तं विस्तृतोऽस्ति । तं च विरलावकाशाः तत्त्वबुभुत्सवः समुत्सुका अपि परिशीलयितुं अशक्ता इति चिन्तयन्तः श्रीपरमहंसाः ज्ञानानन्दभारतीस्वामिनः तस्यैव ज्ञातव्यार्थप्रकाशकं लघुसंग्रहं व्यतन्वत । वयमिमं संग्रहं अवलोक्य समतुष्याम । आशास्महे च वासिष्ठलघुसंग्रहोऽयं जिज्ञासुजनोपकारको भूयादिति ॥

शृङ्गगिरिः<br>प्रमादीच श्रावणवदि<br>सप्तमी इन्दुवासरः<br>20—8—1973

इति नारायणस्मरणम्<br>विद्यातीर्थः ।

# ॥ प्रस्तावना ॥

के. एस्. वेङ्कटरामशास्त्री,
व्याकरणशिरोमणिः, वेदान्तविद्वान्
"श्रीशङ्करकृपा" सहसंपादकः, श्रीरङ्गम्।

अनादाविह संसारे सर्वेऽपि मानवाः स्वीयं नित्यशुद्धबुद्ध-मुक्तसच्चिदानन्दस्वरूपं अविद्यावशात् विस्मृत्य सर्वमपि जगत् भिन्न-भिन्नं परमार्थं च पश्यन्ति। आत्मनि च कर्तृत्वभोक्तृत्वादी-नारोपयन्ति। रागद्वेषादिदोषमूलकानि नानाविधानि पुण्य-पापात्मकानि कर्माणि सर्वदा कुर्वन्ति। तद्बलेन चानुस्यूततया प्रवर्तमाने जन्ममरणप्रवाहे निमज्जन्ति। कामक्रोधादिभिरर्दिताः तापत्रयपीडिताः सर्वदा दुःखपरम्परामेव चानुभवन्ति इति नैवाविदितं विवेकवतां लोकपरीक्षकाणाम्। महता प्रयत्नेन कदाचित् एकस्मिन् दुःखे निवृत्तेऽपि सद्य एव दुःखमन्यत् समागच्छति। विषयानुभवेन जायमानं सुखमपि दुःखसंमिश्रित-मितिकृत्वैव वैषयिकसुखस्यापि दुःखकोटौ निवेशः कृतो महात्मभिः। समालोच्य चैतां परिस्थितिं केचित् पुरुषधौरेयाः अत्यन्तं निर्विण्णाः विवेकादिसाधनचतुष्टयसंपन्ना भवन्ति; तेषामात्यन्तिकदुःख-निवृत्तये नित्यनिरतिशयानन्दलाभाय च प्रवृत्ताः उपनिषदः नाना-प्रकारेण परमार्थतत्त्वमुपदिशन्ति। आचार्यमुखेन आम्नायान्त-प्रतिपादितार्थपरिशीलनेन, मननादिना च मोक्षसाधनं तत्त्वज्ञानं

जायते। तेन सर्वदुःखकारणीभूताविद्यानाशात् दुःखासंस्पृष्टनित्य-निरतिशयानन्दावाप्तिः सिध्यति। उपनिषत्सु च बहुत्र आख्यायिकामुखेन तत्त्वप्रतिपादनरीतिः समादृता सुलभावगाहाय।

एवं सत्यपि सूक्ष्मबुद्धिमात्रसमधिगम्यस्यात्यन्तदुरूहस्य जीवब्रह्मप्रपञ्चतत्त्वस्य सम्यक् परिज्ञानं नैव संभवति असंभावनादि-दोषदूषितहृदयानां मनुष्याणाम् उपनिषत्परिशीलनमात्रेण, प्रत्य-ग्ब्रह्मैक्य–प्रपञ्चमिथ्यात्वादिबाधकानां बह्वीनां युक्तीनामनुभवानां च दर्शनात्। यद्यपि स्मृतिपुराणादिषु क्वचित्क्वचित् उपनिषदर्थ-विवरणं दृश्यते, अथापि धर्मप्रतिपादनप्रधानेषु तेषु ग्रन्थेषु ज्ञान-मार्गप्रतिपादनमत्यल्पमेव वर्तते। किंच जीवब्रह्मैक्य-प्रपञ्च-मिथ्यात्वादिसाधकयुक्तिप्रदर्शनं तु उपनिषत्सु वा स्मृतिपुराणादिषु वा नाधिकं पश्यामः। युक्तिभिरनुचिन्तनमेव हि मननं भवितुमर्हति। मननेनैव हि असंभावना निराकृता भवति। उपपन्नाभिर्युक्तिभिः प्रपञ्चमिथ्यात्वे निश्चिते सत्येव अद्वैतं परमार्थ-तत्त्वं सम्यगवगन्तुं शक्यते।

श्रीमद्वाल्मीकिमहर्षिप्रणीते योगवासिष्ठ-ज्ञानवासिष्ठाभिधाने द्वात्रिंशत्सहस्रश्लोकात्मके महाग्रन्थे तु काव्यपुराणेतिहासशैली-मवलम्ब्य श्रुत्यन्तप्रतिपादिताः तदुपयोगिनश्च सर्वेऽपि विषयाः निश्शेषं नानाख्यानकैः सर्वाशंकानिराकरणपराभिः बह्वीभिर्युक्तिभिः सदृष्टान्तमतिविस्तरेणानुवर्णिता दृश्यन्ते।

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत् साक्षात् रामायणात्मना ॥

सर्ववेदप्रतिपाद्यस्य परब्रह्मणः यदा श्रीरामरूपेणावतारः समभूत्, तदा तत्प्रतिपादको वेदोऽपि तद्वियोगमसहिष्णुरिव श्रीवाल्मीकिमुखात् श्रीरामायणात्मना अवततार इति च विदितमेव हि सर्वेषाम् । तत्र च अनुष्ठेयधर्माणां प्रतिपादकं रामायणं श्रुत्येक-देशकर्मकाण्डस्यैवापरं रूपम् । ज्ञानकाण्डभूतवेदान्तस्यापरा मूर्तिस्तु योगवासिष्ठमेव ।

श्रीरामचन्द्रोऽतिबाल्य एव विद्याभ्यासानन्तरं लब्ध्वा पितुरनुज्ञां, तीर्थयात्रया देशाननेकानटित्वा सर्वत्रापि प्राणिभि-रनुभूयमानं दुःखं साक्षात् दृष्ट्वा नितान्तं निर्विण्णमानसः निरुत्साहः शारीरकार्यकरणेऽपि अभिरुचिरहितः प्रवृत्तिपराङ्मुखः सदा एकान्ते तूष्णीमवतस्थे । तस्मिन्नेव समये विश्वामित्रः अयोध्यामागत्य, राक्षसोपद्रवात् स्वीययज्ञसंरक्षणाय रामं नेतुं दशरथमयाचत । पुत्रवात्सल्येन प्रथमतो निराकुर्वन्नपि दशरथः आचार्यवसिष्ठोपदेशेन प्रसन्नमनाः सन् रामं नेतुं अङ्गीचकार । परिजनमुखात् तदानींतन-रामपरिस्थितिं विज्ञाय वसिष्ठविश्वामित्र-मुनी तदा समागतं रामं निर्वेदकारणं अपृच्छताम् । श्रीरामश्च वैराग्यकारणभूतान् विषयदोषान् विस्तरेण वर्णयामास । ततश्च विश्वामित्रप्रेरणया वसिष्ठः तदीयमोहनिवारणाय विस्तरेण वेदान्त-

प्रतिपादितं तत्त्वमुपदिशति। मध्ये मध्ये श्रीरामकृतप्रश्नानां उत्तर-वर्णनप्रसंगेन नानाकथाभिः मुमुक्षुज्ञेयान् सर्वानपि विषयान् वर्णयति। सर्वस्यापि प्रपञ्चस्य स्वप्नतुल्यत्वेन मिथ्यात्वं बह्वीभि-र्युक्तिभिर्निर्धारयति।

कुरुक्षेत्रे युद्धारम्भसमये प्रवृत्तं श्रीकृष्णार्जुनसंवादं यथा व्यासः सप्तभिः श्लोकशतैरुपनिबबन्ध, एवं वसिष्ठरामसंवादं श्रीवाल्मीकिः द्वात्रिंशत्सहस्रश्लोकैः महाग्रन्थरूपेण निबध्य स्वशिष्याय भरद्वाजायोपदिदेश। आध्यात्मिकं तत्त्वं सर्वमपि निश्शेषं विस्तरेण वर्णयति अस्मिन् ग्रन्थे विद्यमानः कथाभागः तदन्तर्गतनगरवनादिवर्णनं च काव्यपुराणरीत्या ततोऽपि शतगुण-विस्तृतं वर्तते। विषयगौरवे सत्यपि ग्रन्थविस्तरात् एतद्ग्रन्थ-परिशीलने सर्वेषां प्रवृत्तिर्नास्तीति एतस्मात् कारणात् काश्मीर-देशीयः अभिनन्दनपण्डितः षट्सहस्रश्लोकेषु योगवासिष्ठं संगृह्य लघुवासिष्ठनामानं ग्रन्थं रचयामास। अधुनातनास्तावत् तदपि विस्तृतमेव मन्यन्ते। वासिष्ठप्रतिपादितविषयजिज्ञासा च तेषु प्ररूढा वर्तते। तेषां कृते श्रीज्ञानानन्दभारतीस्वामिनः परमलघु-वासिष्ठरूपं श्रीवासिष्ठसंग्रहाभिधानं सप्तशताधिकसहस्रश्लोकात्मकं ग्रन्थमिमं प्रणीय जिज्ञासुलोकस्य महान्तमुपकारमकुर्वन्। ग्रन्थे चास्मिन् अवश्यविज्ञेयाः मूलान्तर्गताः विषयाः सर्वेऽपि कथाभाग-सहिताः अन्यूनमनुवर्णिताः संक्षेपेण। लघुवासिष्ठवत् अत्रापि बहुषु स्थलेषु मूलगताः श्लोकाः तथैव दृश्यन्ते।

विषयस्य संग्रहेण वा विस्तरेण वा प्रतिपादने दक्षाः एते विपश्चिदपश्चिमा यतीन्द्राः स्वप्रणीतं ग्रन्थमिमं श्रीदक्षिणाम्नाय-श्रीशृङ्गगिरि–श्रीशारदापीठाधिपानां श्रीजगद्गुरूणां श्रीमदभिनव-विद्यातीर्थश्रीचरणानां दिव्यचरणसरोजयोः समर्पयन्ति स्म। श्रीजगद्गुरवश्च ग्रन्थमेतमामूलाग्रं समवलोक्य, संमुद्र्य प्रकाश-यितुं प्रीतिपुरस्सरमाज्ञाप्य श्रीमुखप्रदानेन च महान्तमनुग्रह-मतानिषुः। तत्र भवतामाचार्यपादानामाज्ञामनुसृत्य ग्रन्थोऽयं इदानीं प्रकाशीक्रियते।

मूलग्रन्थे योगवासिष्ठे निर्वाणाख्ये अन्तिमप्रकरणे उत्तरार्धे विद्यमानाः विषयाः सर्वेऽपि पूर्वप्रकरणेषु वर्णितप्राया एव। समान एव विषयः शब्दान्तरेण पुनः प्रतिपाद्यते। अनेनैव कारणेन पौनरुक्त्यपरिहाराय लघुवासिष्ठे स्वीये ग्रन्थे अभिनन्दनपण्डितः उत्तरार्धं न संगृहीतवान्। तामेव पद्धतिमनुसृत्य अस्मिन् अपि ग्रन्थे उत्तरार्धं न संगृहीतम्।

वेदान्तार्थप्रतिपादकेषु प्राचीनग्रन्थेषु सर्वोत्तमतया सर्वै-रभ्युपगतस्य योगवासिष्ठस्य परमसंग्रहभूतमिमं ग्रन्थं सर्वेऽपि स्वीकृत्य पुनः पुनः परिशीलनं कृत्वा वसिष्ठोपदिष्टानर्थान् सम्यगव-गत्य तच्चिन्तनेन परमार्थतत्त्वं विज्ञाय कृतार्थतालाभाय प्रयत्नं कुर्वन्तु इति अभ्यर्थये॥

---

## ॥ विषयसूचिका ॥

---

## शुद्धाशुद्धपत्रिका

| पृष्ठं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 17 | 1 | माक्षस्य | मोक्षस्य |
| 29 | 13 | 4 | 5 |
| 70 | 15 | संकल्पः | संकल्पं |
| 92 | 4 | स्वस्थ | स्वस्य |
| ,, | 9 | तपश्चक्रे | तपश्चक्रे |
| 114 | 7 | इत्थ | इत्थं |
| ,, | 18 | उपशान्त | उपशान्तं |
| 144 | 11 | देवतार्चन | देवार्चन |
| 177 | 8 | वलय | वलयं |
| 215 | 14 | ऊवे | ऊचे |

---

॥ श्रीगुरुभ्यो नमः ॥

# ॥ श्रीवासिष्ठसंग्रहः ॥

—o—

## ॥ प्रथमः सर्गः ॥

---

## ॥ श्रीरामनिर्वेदः ॥

॥ श्रीरामाय नमः ॥

1 भरद्वाजप्रश्नः ।

यतः सर्वाणि भूतानि प्रतिभान्ति स्थितानि च ।
यत्रैवोपशमं यान्ति तस्मै सत्यात्मने नमः ॥ १ ॥

दिवि भूमौ तथाऽऽकाशे बहिरन्तश्च मे विभुः ।
यो विभात्यवभासात्मा तस्मै सर्वात्मने नमः ॥ २ ॥

अहं बद्धो विमुक्तः स्यां इति यस्यास्ति निश्चयः ।
नात्यन्तमज्ञो नो तज्ज्ञः सोऽस्मिन् शास्त्रेऽधिकारवान् ॥

गुरुमासीनमेकान्ते वाल्मीकिं सर्वदर्शिनम् ।
पप्रच्छ प्रणतो भूत्वा भरद्वाजो मृदुस्वरम् ॥ ४ ॥

भगवन् ज्ञातुमिच्छामि कथं संसारसंकटे ।
रामो व्यवहृतो ह्यस्मिन् कारुण्यात् ब्रूहि मे गुरो ॥ ५ ॥

वाल्मीकिरुवाच —

वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा ।
मलिना जन्मनो हेतुः शुद्धा जन्मविनाशिनी ॥ ६ ॥

ये शुद्धवासना भूयो न जन्मानर्थभाजनम् ।
ज्ञातज्ञेयाः त उच्यन्ते जीवन्मुक्ता महाधियः ॥ ७ ॥

जीवन्मुक्तिपदं प्राप्तो यथा रामो महामनाः ।
तत्तेऽहं शृणु वक्ष्यामि जरामरणशान्तये ॥ ८ ॥

विद्यागृहात् विनिष्क्रम्य स्वगृहे वसतः सुखम् ।
द्रष्टुं तीर्थाश्रमश्रेणीः रामस्योत्कण्ठितं मनः ॥ ९ ॥

ततः पितरमामन्त्र्य तीर्थयात्रार्थमुद्यतः ।
नदीतीराणि पुण्यानि वनान्यायतनानि च ॥ १० ॥

संदृश्य पुनरागत्य गेहे स न्यवसत् सुखम् ।
अथोनषोडशे वर्षे वर्तमाने रघूद्वहः ॥ ११ ॥

जगामानुदिनं कार्श्यं शरदीवामलं सरः ।
चिन्तापरवशस्तूष्णीं अव्यापारो बभूव ह ॥ १२ ॥

2 विश्वामित्रागमनम् ।

एतस्मिन्नेव काले तु विश्वामित्रोऽभ्यगात् ऋषिः ।
तदा दशरथो राजा पाद्यमर्घ्यं निवेद्य च ॥ १३ ॥

प्राञ्जलिः प्रयतो भूत्वा विश्वामित्रमभाषत ।
"तीर्थभूतोऽसि मे ब्रह्मन् प्राप्तः परमधार्मिकः ॥ १४ ॥

कश्च ते परमः कामः किंच ते करवाण्यहम्" ।
तत् राजवचनं श्रुत्वा विश्वामित्रोऽभ्यभाषत ॥ १५ ॥

"अहं नियममातिष्ठे सिद्ध्यै सत्यपराक्रमम् ।
मम विघ्नकराणां च राक्षसानां विनिग्रहे ॥ १६ ॥

दक्षं रामं महात्मानं पुत्रं मे दातुमर्हसि" ।
श्रुत्वैतद् विह्वलं भूपं वसिष्ठो वाक्यमब्रवीत् ॥ १७ ॥

"न पालयसि चेद् वाक्यं कोऽपरः पालयिष्यति" ।
तथा वसिष्ठे ब्रुवति 'रामो राजीवलोचनः ॥ १८ ॥

आगतः तीर्थयात्रायाः ततः प्रभृति दुर्मनाः ।
सर्वमेवासदित्युक्त्वा तूष्णीं एकोऽवतिष्ठते' ॥ १९ ॥

इति रामजनात् श्रुत्वा विश्वामित्र उवाच ह ।
"एवं चेत् तं महाप्राज्ञं आनयन्त्वत्र वेगतः ॥ २० ॥

एष मोहो रघुपतेः नापद्भ्यो नापि रागतः ।
विवेकवैराग्यवतो बोध एव महोदयः ॥ २१ ॥

मोहेऽस्मिन् मार्जिते युक्त्या विश्रान्तिमेष्यति ध्रुवम्"
एतस्मिन्नन्तरे रामः पितुः पादाभिवन्दनम् ॥ २२ ॥

कर्तुं अभ्यागतस्तत्र प्रणम्य पितरं मुनी ।
भूमौ परिजनास्तीर्णे चासने स न्यविक्षत ॥ २३ ॥

तदा राज्ञा मुनिभ्यां च संपृष्टो मोहकारणम् ।
उवाच वचनं रामो यथावदतिविस्तरम् ॥ २४ ॥

3 जीवितं दुःखमयम् ।

श्रीराम उवाच —

कथयाम्यहमज्ञोऽपि विचारः क्रियते मया ।
जायते मृतये लोको म्रियते जननाय च ॥ २५ ॥

अस्थिराः सर्व एवैते सचराचरचेष्टिताः ।
किं मे राज्येन किं भोगैः कोऽहं किमिदमागतम् ॥२६॥

एवं विमृशतस्तीव्रं सर्वेष्वपि च वस्तुषु ।
अरतिर्मम संजाता पथिकस्य मरुष्विव ॥ २७ ॥

शाम्यतीदं कथं दुःखं इति तप्तोऽस्मि चिन्तया ।
श्रीर्मुने परिमोहाय साऽपि नूनं न शर्मदा ॥ २८ ॥

श्रीमान् अजननिन्द्यश्च शूरश्चाप्यविकत्थनः ।
समदृष्टिः प्रभुश्चैव दुर्लभाः पुरुषास्त्रयः ॥ २९ ॥

आयुः पल्लवकोणाग्रलम्बाम्बुकणभङ्गुरम् ।
युज्यते वेष्टनं वायोः आकाशस्य च खण्डनम् ॥ ३० ॥

ग्रथनं च तरङ्गाणां आस्था नायुषि युज्यते ।
तरवोऽपि हि जीवन्ति जीवन्ति मृगपक्षिणः ॥ ३१ ॥

स जीवति मनो यस्य मननेनैव जीवति ।
जाताः त एव जगति जन्तवः साधुजीविताः ॥ ३२ ॥

ये पुनर्नेह जायन्ते शेषा जरठगर्दभाः ।
भारोऽविवेकिनः शास्त्रं भारो ज्ञानं च रागिणः ॥ ३३ ॥

अशान्तस्य मनो भारो भारोऽनात्मविदो वपुः ।
अहंकारवशात् आपत् अहंकारात् दुराधयः ॥ ३४ ॥

अहंकारवशात् ईहा नाहंकारात् परो रिपुः ।
इतश्चेतश्च सुव्यग्रं व्यर्थमेवाभिधावति ॥ ३५ ॥

दूरात् दूरतरं चेतो ग्रामे कौलेयको यथा ।
न प्राप्नोति क्वचित् किंचित् प्राप्तैरपि महाधनैः ॥

नान्तः संपूर्णतामेति करण्डक इवाम्बुभिः ।
अप्यब्धिपानात् महतः सुमेरून्मूलनादपि ॥ ३७ ॥

अपि वह्न्यशनात् साधो विषमः चित्तनिग्रहः ।
सर्वसंसारदोषाणां तृष्णैका दीर्घदुःखदा ॥ ३८ ॥

नासिधारा न वज्रार्चिः न तप्तायःकणार्चिषः ।
तथा तीक्ष्णा यथा ब्रह्मन् तृष्णेयं हृदि संस्थिता ॥ ३९ ॥

अपि मेरूपमं प्राज्ञं अपि शूरं अपि स्थिरम् ।
तृणीकरोति तृष्णैका निमेषेण नरोत्तमम् ॥ ४० ॥

4 वयोवस्थाः दुःखदाः ।

देहः स्फुरति संसारे सोऽपि दुःखाय केवलम् ।
नास्ति देहसमः शोच्यो नीचो गुणबहिष्कृतः ॥ ४१ ॥

किं श्रिया किं च राज्येन किं कायेन किमीहितैः ।
दिनैः कतिपयैरेव कालः सर्वं निकृन्तति ॥ ४२ ॥

रक्तमांसमयस्यास्य सबाह्याभ्यन्तरं मुने ।
नाशैकधर्मिणो ब्रूहि कैव कायस्य रम्यता ॥ ४३ ॥

अशक्तिरापदस्तृष्णा मूकता मूढबुद्धिता ।
गृध्नुता लोलता दैन्यं सर्वं बाल्ये प्रवर्तते ॥ ४४ ॥

अमेध्य एव रमते बालः कौलेयको यथा ।
शैशवे गुरुतो भीतिः मातृतः पितृतस्तथा ॥ ४५ ॥

जनतो ज्येष्ठबालाच्च शैशवं भयमन्दिरम् ।
विस्तीर्णाऽपि प्रसन्नाऽपि पावन्यपि हि यौवने ॥ ४६ ॥

मतिः कलुषतामेति प्रावृषीव तरङ्गिणी ।
यदा यदा परां कोटिं अध्यारोहति यौवनम् ॥ ४७ ॥

वल्गन्ति सज्वराः कामाः तदा नाशाय केवलम् ।
ते वन्द्यास्ते महात्मानः त एव पुरुषा भुवि ॥ ४८ ॥

ये सुखेन समुत्तीर्णाः साधो यौवनसंकटात् ।
मांसपाञ्चालिकायास्तु यन्त्रलोलेऽङ्गपञ्जरे ॥ ४९ ॥

स्नाय्वस्थिग्रन्थिशालिन्याः स्त्रियाः किमिव शोभनम् ।
त्वङ्मांसरक्तबाष्पाम्बु पृथक् कृत्वा विलोचनम् ॥ ५० ॥

समालोकय रम्यं चेत् किं मुधा परिमुह्यसि ।
यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क्व भोगभूः ॥५१॥

स्त्रियं त्यक्त्वा जगत् त्यक्तं जगत् त्यक्त्वा सुखी भवेत् ।
अपर्याप्तं हि बालत्वं बलात् पिबति यौवनम् ॥ ५२ ॥

यौवनं च जरा पश्चात् पश्य कर्कशतां मिथः ।
दुष्प्रेक्ष्यं जरठं दीनं हीनं गुणपराक्रमैः ॥ ५३ ॥

गर्वो ह्यभ्येति सोल्लासं उपभोक्तुं न शक्यते ।
हृदयं दह्यते नूनं शक्तिदौस्थ्येन वार्धके ॥ ५४ ॥

## 5 कालवैभवम् ।

क्वचिद्वा विद्यते येषां संसारे सुखभावना ।
आखुः तन्तुमिवाशेषं कालः तामपि कृन्तति ॥ ५५ ॥

महतामपि नो देवः परिपालयति क्षणम् ।
कालः कवलिताशेषविश्वो विश्वात्मतां गतः ॥ ५६ ॥

वृत्तेऽस्मिन्नेवमेतेषां कालादीनां महामुने ।
संसारनाम्नि कैवास्था मादृशानां भवत्विह ॥ ५७ ॥

मनो विमुह्यतीवान्तः मुदिता दूरतां गता ।
धीरताऽधीरतामेति ध्रुवोऽप्यध्रुवजीवितः ॥ ५८ ॥

अमरा अपि मार्यन्ते कैवास्था मादृशे जने ।
शैला अपि विशीर्यन्ते कैवास्था मादृशे जने ॥ ५९ ॥

शुष्यन्त्यपि समुद्राश्च शीर्यन्ते तारका अपि ।
सिद्धा अपि विनश्यन्ति कैवास्था मादृशे जने ॥ ६० ॥

परमेष्ठ्यपि निष्ठावान् ह्रियते हरिरप्यजः ।
भवोऽप्यभावमायाति कैवास्था मादृशे जने ॥ ६१ ॥

ब्रह्मा विष्णुश्च रुद्रश्च सर्वा वा भूतजातयः ।
नाशमेवानुधावन्ति सलिलानीव वाडवम् ॥ ६२ ॥

आपदः क्षणमायान्ति क्षणमायान्ति संपदः ।
क्षणं जन्म क्षणं मृत्युः मुने किमिव न क्षणम् ॥ ६३ ॥

इति मे दोषदावाग्निदग्धे सपदि चेतसि ।
प्रस्फुरन्ति न भोगाशाः मृगतृष्णाः सरस्स्विव ॥ ६४ ॥

नाभिनन्दामि मरणं नाभिनन्दामि जीवितम् ।
यथा तिष्ठामि तिष्ठामि तथैव विगतज्वरम् ॥ ६५ ॥

यथा जानासि भगवन् तथा मोहनिवृत्तये ।
ब्रूहि मे साधवो येन नूनं निर्दुःखतां गताः ॥ ६६ ॥

अथवा तादृशी युक्तिः यदि ब्रह्मन् न विद्यते ।
न वक्ति मम वा कश्चित् विद्यमानामपि स्फुटम् ॥ ६७ ॥

स्वयं चैव न चाप्नोमि तां विश्रान्तिमनुत्तमाम् ।
तदहं त्यक्तसर्वेहो निरहङ्कारतां गतः ॥ ६८ ॥

न किञ्चिदपि वाञ्छामि देहत्यागात् ऋते मुने ।
मौन एवावतिष्ठामि लिपिकर्मस्विवार्पितः ॥ ६९ ॥

इति श्रीवासिष्ठसंग्रहे श्रीरामनिर्वेदो नाम
प्रथमः सर्गः ॥

---

## ॥ द्वितीयः सर्गः ॥

——*——

## ॥ उपदेशोपक्रमः ॥

### 1 शुकोपाख्यानम् ।

वाल्मीकिरुवाच—

इत्युक्त्वा विरते रामे विश्वामित्रोऽभ्यभाषत ।

विश्वामित्र उवाच—

न राघव तवास्त्यन्यत् ज्ञेयं ज्ञानवतां वर ॥ १ ॥

स्वयैव सूक्ष्मया बुद्ध्या सर्वं विज्ञातवानसि ।
भगवद्व्यासपुत्रस्य शुकस्येव मतिस्तव ॥ २ ॥

विश्रान्तिमात्रमेवान्तः ज्ञातज्ञेयाऽप्यपेक्षते ।
शुको व्यासात्मजः पूर्वं चिन्तयन् जगतो गतिम् ॥ ३ ॥

स्वयमेव विवेकेन बुद्धेऽपि परवस्तुनि ।
इदं वस्त्विति विश्वासं नासावात्मन्युपाययौ ॥ ४ ॥

अविश्रान्तमनाः स्थित्वा पप्रच्छ पितरं तदा ।
संसाराडम्बरमिदं कथमभ्युदितं मुने ॥ ५ ॥

कथं च प्रशमं याति कियत् कस्य कदेति च ।
वक्तव्यमखिलं प्रोक्तं व्यासेन विदितात्मना ॥ ६ ॥

जानामि पूर्वमेवेति नासौ तत् बह्वमन्यत ।
अभिप्रायमिमं ज्ञात्वा 'नाहं जानामि तत्त्वतः ॥ ७ ॥

जनको वेत्ति तत्त्वं तस्मात् सर्वमवाप्नुहि' ।
पित्रेत्युक्तः शुकः प्रायात् जनकस्य पुरीं तदा ॥ ८ ॥

द्वारि स्थितं शुकं ज्ञात्वा जिज्ञासार्थं अवज्ञया ।
तूष्णीं अवस्थितो राजा गते तं दिनसप्तके ॥ ९ ॥

प्रवेश्याङ्गणं तत्रापि स्थितं च दिनसप्तकम् ।
ततः प्रवेशयामास जनकोऽन्तःपुरं शुकम् ॥ १० ॥

ततोऽन्मदाभिः कान्ताभिः भोजनैः भोगसञ्चयैः ।
लालितोऽहानि सप्तापि स्वच्छः सुमना अभवत् ॥ ११ ॥

परिज्ञातस्वभावं तं आनीय प्रणनाम ह ।
स्वागतं ते महाभाग प्राप्ताखिलमनोरथ ॥ १२ ॥

किमीहितं तवेत्युक्तः शुको राजानमब्रवीत् ।
'संसाराडम्बरमिदं कथमभ्युदितं गुरो ॥ १३ ॥

कथं प्रशममायाति यथावत् कथयाशु मे ।
इत्युक्तो जनकः प्राह पित्रा प्रोक्तं यदेव तत् ॥ १४ ॥

एतत् श्रुत्वा शुकः प्राह 'ज्ञातमेतत् मया पुरा ।
स्वयमेव विवेकेन पित्राऽप्येतत् उदाहृतम् ॥ १५ ॥

भवताऽप्येष एवार्थः उक्तः शास्त्रेषु यः श्रुतः ।
त्वत्तो विश्राममाप्नोति कथं चेतो वद प्रभो' ॥ १६ ॥

जनक उवाच —

'अव्युच्छिन्नचिदात्मैकः पुमानस्तीह नेतरत् ।
स्वसंकल्पवशात् बद्धो निःसङ्कल्पश्च मुच्यते ॥ १७ ॥

प्राप्तं प्राप्तव्यमखिलं मुक्तस्त्वं भ्रान्तिमुत्सृज' ।
अनुशिष्टस्तथा राज्ञा विशश्राम शुकस्तदा ॥ १८ ॥

वीतशोकः शशामासौ निर्विकल्पसमाधिना ।
तवाप्यपेक्ष्यते नूनं मलमात्रापमार्जनम् ॥ १९ ॥

वासनातानवं राम मोक्ष इत्युच्यते बुधैः ।
पदार्थवासनादार्ढ्यं बन्ध इत्यभिधीयते ॥ २० ॥

एवमुक्त्वा वसिष्ठं च विश्वामित्रोऽभ्यभाषत ।
अत्रास्य चित्तविश्रान्त्यै राघवस्य महात्मनः ॥ २१ ॥

रघूणामपि सर्वेषां प्रभो कुलगुरो मुने ।
युक्तिं चोपदिशाद्य त्वं इत्युक्तो मुनिरब्रवीत् ॥ २२ ॥

यदेव ब्रह्मणा प्रोक्तं संसारभ्रमशान्तये ।
तत् स्मरामीति संप्रोच्य वक्तुं समुपचक्रमे ॥ २३ ॥

## 2 वासना द्विविधा।

वसिष्ठ उवाच —

सर्वदा सर्वमेवेह संसारे रघुनन्दन।
सम्यक् प्रयुक्तात् सर्वेण पौरुषात् समवाप्यते ॥ २४ ॥

उच्छास्त्रं शास्त्रितं चेति द्विविधं पौरुषं स्मृतम्।
तत्रोच्छास्त्रं अनर्थाय परमार्थाय शास्त्रितम् ॥ २५ ॥

श्रीराम उवाच —

प्राक्तनं वासनाजालं नियोजयति मां यथा।
मुने तथैव तिष्ठामि कृपणः किं करोम्यहम् ॥ २६ ॥

वसिष्ठ उवाच —

द्विविधो वासनाव्यूहः शुभश्चैवाशुभश्च ते।
वासनौघेन शुद्धेन तत्र चेदपनीयसे ॥ २७ ॥

तत्क्रमेण शुभेनैव पदं प्राप्स्यसि शाश्वतम्।
अथ चेदशुभो भावः यत्नात् जेतव्य एव सः ॥ २८ ॥

शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित्।
पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥ २९ ॥

अशुभेषु समाविष्टं शुभेष्वेवावतारय।
सन्दिग्धायामपि भृशं शुभामेव समाहर ॥ ३० ॥

ततः पक्वकषायेण नूनं विज्ञातवस्तुना।
शुभोऽप्यसौ त्वया त्याज्यो वासनौघो निराधिना ॥

चिदाकाशोऽविनाशात्मा, तस्माद् विष्णुरजायत ।
तस्यापि हृदयाम्भोजाद् परमेष्ठी व्यजायत ॥ ३२ ॥

स सृष्ट्वा सकलं सर्गं नानाव्यसनसंकुलम्
जगाम करुणामीशः पुत्रदुःखात् पिता यथा ॥ ३३ ॥

तपो दानं जपस्तीर्थं नात्यन्तं दुःखशान्तये ।
तद् तावद् दुःखमोक्षार्थं ज्ञानं प्रकटयाम्यहम् ॥ ३४ ॥

इति संचिन्त्य सृष्ट्वा मां मनसा प्रोक्तवानसौ ।
गच्छ भारतवर्षं त्वं लोकानुग्रहहेतुना ॥ ३५ ॥

तत्र क्रियाकाण्डपराः त्वया पुत्र महाधियः ।
उपदेश्याः क्रियाकाण्डक्रमेण क्रमशालिना ॥ ३६ ॥

विरक्तास्तु महाप्राज्ञाः ज्ञानेनानन्ददायिना ।
इति तेन नियुक्तोऽहं तिष्ठामि भुवनस्थले ॥ ३७ ॥

## ३ मोक्षद्वारपालकाः ।

मोक्षद्वारे द्वारपालाः चत्वारः परिकीर्तिताः ।
शमो विचारः संतोषः चतुर्थः साधुसङ्गमः ॥ ३८ ॥

एते सेव्याः प्रयत्नेन चत्वारो द्वौ त्रयोऽथवा ।
एकं वा सर्वयत्नेन सर्वमुत्सृज्य संश्रयेत् ॥ ३९ ॥

एकस्मिन् वशगे यान्ति चत्वारोऽपि वशं यतः ।
एषां एकतमासक्त्या मोक्षद्वारे प्रवेश्यते ॥ ४० ॥

यानि दुःखानि या तृष्णा दुःसहा ये दुराधयः ।
तत् सर्वं शान्तचेतस्सु तमोऽर्केष्विव नश्यति ॥ ४१ ॥

न रसायनपानेन न लक्ष्म्यालिङ्गनेन च ।
तथा सुखमवाप्नोति शमेनान्तर्यथा मनः ॥ ४२ ॥

तपस्विषु बहुज्ञेषु याजकेषु नृपेषु च ।
बलवत्सु गुणाढ्येषु शमवानेव राजते ॥ ४३ ॥

विचारात् तीक्ष्णतामेत्य धीः पश्यति परं पदम् ।
दीर्घसंसाररोगस्य विचारो हि महौषधम् ॥ ४४ ॥

कोऽहं कस्य च संसारः इत्यापद्यपि धीमता ।
चिन्तनीयं प्रयत्नेन सप्रतीकारमात्मना ॥ ४५ ॥

कोऽहं कथमयं दोषः संसाराख्य उपागतः ।
न्यायेनैवं परामर्शो विचार इति कथ्यते ॥ ४६ ॥

संतुष्टः परमभ्येति विश्रामं सुखलक्षणम् ।
संतोषामृतपानेन यः शान्तः तृप्तिमागतः ॥ ४७ ॥

अप्राप्तवाञ्छामुत्सृज्य संप्राप्ते समतां गतः ।
अदृष्टखेदाखेदो यः संतुष्टः स इहोच्यते ॥ ४८ ॥

नाभिवाञ्छत्यसंप्राप्तं प्राप्तं भुङ्क्ते यथाक्रमम् ।
यस्तु सौम्यसमाचारः संतुष्ट इति कथ्यते ॥ ४९ ॥

सर्वत्रोपकरोतीह साधुः साधुसमागमः ।
आपत् संपदिवाभाति विद्वज्जनसमागमे ॥ ५० ॥

यः स्नातः शीतसितया साधुसङ्गमगङ्गया ।
किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः ॥

विच्छिन्नग्रन्थयः तज्ज्ञाः साधवः सर्वसंमताः ।
सर्वोपायेन संसेव्याः ते ह्युपायाः भवाम्बुधौ ॥ ५२ ॥

चत्वार एते विमलाः उपाया भवभेदने ।
यैरभ्यस्तास्त उत्तीर्णा मोहवारिभवार्णवात् ॥ ५३ ॥

इति श्रीवासिष्ठसंग्रहे उपदेशोपक्रमो नाम
द्वितीयः सर्गः ॥

---

## ॥ तृतीयः सर्गः ॥

—*—

## ॥ उत्पत्तिक्रमः ॥

### 1 बन्धस्वरूपम् ।

वसिष्ठ उवाच —

बन्धस्य तावद्रूपं त्वं कथ्यमानमिदं शृणु ।
ततः स्वरूपं मोक्षस्य ज्ञास्यसि त्वमसंशयम् ॥ १ ॥

द्रष्टुः दृश्यस्य सत्ता हि बन्ध इत्यभिधीयते ।
द्रष्टा दृश्यवशात् बद्धो दृश्याभावे विमुच्यते ॥ २ ॥

जगत् त्वं अहं इत्यादिर्मिथ्यात्मा दृश्यमुच्यते ।
यावदेतत् संभवति तावन्मोक्षो न विद्यते ॥ ३ ॥

यदिदं दृश्यते सर्वं जगत् स्थावरजङ्गमम् ।
तत् सुषुप्ताविव स्वप्नः कल्पान्ते प्रविनश्यति ॥ ४ ॥

ततः स्तिमितगम्भीरं न तेजो न तमस्ततम् ।
अनाख्यं अनभिव्यक्तं सत् किंचित् अवशिष्यते ॥ ५ ॥

ऋतं आत्मा परं ब्रह्म सत्यं इत्यादिका बुधैः ।
कल्पिता व्यवहारार्थं तस्य संज्ञा महात्मनः ॥ ६ ॥

स तथाभूत एवात्मा स्वयमन्य इवोल्लसन् ।
जीवतां उपयातीव मननात् स्थूलतां गतः ॥ ७ ॥

मनो भवति भूतात्मा तरङ्ग इव वारिधेः ।
तेनेयं इन्द्रजालश्रीः जागती प्रवितन्यते ॥ ८ ॥

अविद्या संसृतिः मोहो बन्धो माया मलं तमः ।
इति नामानि तस्याश्च कल्पितानि भवन्ति हि ॥ ९ ॥

यथा कटकशब्दार्थः पृथक्त्वार्हो न काञ्चनात् ।
न हेम कटकात् तद्वत् जगच्छब्दार्थता परे ॥ १० ॥

यथाऽङ्कुरोऽन्तर्बीजस्य संस्थितो देशकालतः ।
तनोति भासुरं देहं तनोत्येवं हि दृश्यधीः ॥ ११ ॥

2 मनोमयं जगत् ।

सर्वेषामेव देहौ द्वौ भूतानां कारणात्मनाम् ।
अजस्य कारणाभावात् ब्रह्मणस्तु स्वयंभुवः ॥ १२ ॥

आतिवाहिक एवास्ति देहो नास्त्याधिभौतिकः ।
आकाशादेव यो जातः स व्योमैव भवेत् किल ॥ १३ ॥

सहकारीणि नो सन्ति कारणान्यस्य कानिचित् ।
ब्रह्मा संकल्पपुरुषः पृथ्व्यादिरहिताकृतिः ॥ १४ ॥

ब्रह्मणा तन्यते विश्वं मनसैव स्वयम्भुवा ।
मनोमयं अतो विश्वं यन्नाम परिदृश्यते ॥ १५ ॥

यत् अर्थप्रतिभानं तत् मन इत्यभिधीयते ।
नास्त्यस्य मनसो रूपं संकल्पात् तत् न भिद्यते ॥ १६ ॥

अविद्या संसृतिः चित्तं बन्धोऽज्ञानं मनः तमः ।
इति संकल्पजालस्य नामान्येतानि राघव ॥ १७ ॥

संकल्पजाले गलिते स्वरूपं अवशिष्यते ।
महाप्रलयसंपत्तौ असत्तां समुपागते ॥ १८ ॥

अशेषदृश्यसर्गादौ शान्तमेवावशिष्यते ।
आस्तेऽनस्तमितो भास्वान् परमात्मा महेश्वरः ॥ १९ ॥

यतो वाचो निवर्तन्ते यो मुक्तैः अवगम्यते ।
यस्य चात्मादिकाः संज्ञाः कल्पिताः न स्वभावजाः ॥

आविर्भावतिरोभावमयाः त्रिभुवनोर्मयः ।
स्फुरन्त्यतितते यस्मिन् मराविव मरीचयः ॥ २१ ॥

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ २२ ॥

3 जीवन्मुक्तलक्षणम् ।

नृणां ज्ञानैकनिष्ठानां आत्मज्ञानविचारिणाम् ।
सा जीवन्मुक्ततोदेति विदेहोन्मुक्ततैव या ॥ २३ ॥

यथास्थितं इदं यस्य व्यवहारवतोऽपि च ।
अस्तं गतं स्थितं व्योम स जीवन्मुक्त उच्यते ॥ २४ ॥

नोदेति नास्तमायाति सुखे दुःखे मुखप्रभा ।
यथाप्राप्तस्थितिः यस्य स जीवन्मुक्त उच्यते ॥ २५ ॥

यो जागर्ति सुषुप्तिस्थो यस्य जाग्रत् न विद्यते ।
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥ २६ ॥

रागद्वेषभयादीनां अनुरूपं चरन्नपि ।
योऽन्तः व्योमवदत्यच्छः स जीवन्मुक्त उच्यते ॥ २७ ॥

यस्य नाहंकृतो भावो यस्य बुद्धिः न लिप्यते ।
कुर्वतोऽकुर्वतो वापि स जीवन्मुक्त उच्यते ॥ २८ ॥

यस्मात् नोद्विजते लोको लोकात् नोद्विजते च यः ।
हर्षामर्षभयोन्मुक्तः स जीवन्मुक्त उच्यते ॥ २९ ॥

शान्तसंसारकल्लोलः कलावानपि निष्कलः ।
यः सचित्तोऽपि निश्चित्तः स जीवन्मुक्त उच्यते ॥ ३० ॥

यः समस्तार्थजातेषु व्यवहार्यपि शीतलः ।
परार्थेष्विव पूर्णात्मा स जीवन्मुक्त उच्यते ॥ ३१ ॥

जीवन्मुक्तिपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ ३२ ॥

विदेहमुक्तो नोदेति नास्तमेति न शाम्यति ।
किमप्यव्यपदेश्यात्मा पूर्णात् पूर्णतराकृतिः ॥ ३३ ॥

4　ब्रह्मस्वरूपम् ।

महाप्रलयसंपत्तौ सर्वकारणकारणम् ।
शिष्यते यत् परं ब्रह्म तदिदं वर्ण्यते शृणु ॥ ३४ ॥

चिन्मात्रं चेत्यरहितं अनन्तं अजरं शिवम् ।
अनादिमध्यपर्यन्तं यदनादि निरामयम् ॥ ३५ ॥

द्रष्टृदर्शनदृश्यानां मध्ये यत् दर्शनं स्थितम् ।
वेदनस्य प्रकाशस्य दृश्यस्य तमसः तथा ॥ ३६ ॥

वेदनं यत् अनाद्यन्तं तद्रूपं परमात्मनः ।
वेद्यवेदनवेत्तृत्वरूपत्रयमिदं पुरः ॥ ३७ ॥

यतोदेत्यस्तमायाति निर्विकारं निरञ्जनम् ।
यत् सदा भाति सद्रूपं तत् रूपं परमात्मनः ॥ ३८ ॥

इति श्रीवासिष्ठसंग्रहे उत्पत्तिक्रमो नाम
तृतीयः सर्गः ॥

---

## ॥ चतुर्थः सर्गः ॥

—०—

# ॥ लीलोपाख्यानम् ॥

### 1 देवीवरप्राप्तिः।

वसिष्ठ उवाच—

अत्रेदं मण्डपाख्यानं चित्तविश्रान्तिदं शृणु ।
पद्मो नाम नृपः कश्चित् श्रीमान् आसीत् विवेकवान् ॥

तस्यासीत् सुभगा भार्या लीला नाम पतिव्रता ।
सैकदा चिन्तयामास 'प्राणेभ्योऽपि प्रियः पतिः ॥ २ ॥

यौवनोल्लासवान् श्रीमान् कथं स्यात् अजरामरः' ।
'तपोजपयमैः नूनं समस्ताः सिद्धसिद्धयः ॥ ३ ॥

संप्राप्यन्तेऽमरत्वं तु न कथंचन लभ्यते ।'
एवं द्विजमुखात् श्रुत्वा चिन्तयामास सा पुनः ॥ ४ ॥

"मरणं भर्तुरग्रे मे यदि दैवात् भविष्यति ।
तत् सर्वदुःखनिर्मुक्ता संस्थास्ये सुखमात्मनि ॥ ५ ॥

यद्यसौ म्रियते पूर्वं तज्जीवो न गृहात् बहिः ।
यथा गच्छेत् तथोपास्या मया देवी सरस्वती" ॥ ६ ॥

इति निश्चित्य सा नाथं अनुक्त्वैव वराङ्गना ।
यथाशास्त्रं चकारोग्रं तपो नियममास्थिता ॥ ७ ॥

तुष्टा भगवती प्राह "गृहाण वरमीप्सितम्" ।
देवीं स्तुत्वा ततो लीला वरद्वयमयाचत ॥ ८ ॥

"भर्तुर्जीवो विदेहस्य मायासीत् निजमण्डपात् ।
यदाऽहं प्रार्थये त्वां च तदा मे देहि दर्शनम्" ॥ ९ ॥

एतत् वरद्वयं लब्ध्वा बभूवानन्दधारिणी ।
काले बहुतिथे याते भर्ता तस्याः ममार ह ॥ १० ॥

देव्याज्ञया तदा राज्ञी शोकसंतापपीडिता ।
शवीभूतं निवेश्याथ भर्तारं पुष्पखण्डके ॥ ११ ॥

दुःखात् आहूय सा देवीं उवाच भृशदुःखिता ।
"क्व ममात्रस्थितो भर्ता किं करोत्यथ कीदृशः ॥ १२ ॥

समीपं नय मां तस्य नैका शक्नोमि जीवितुम् ।"
एवमुक्त्वा तदा देवी ब्रह्मतत्त्वमुपादिशत् ॥ १३ ॥

"चित्ताकाशं चिदाकाशं आकाशं च तृतीयकम् ।
द्वाभ्यां शून्यतरं विद्धि चिदाकाशं वरानने ॥ १४ ॥

तस्मिन् निरस्तनिःशेषसंकल्पा स्थितिमेषि चेत् ।
सर्वात्मकं पदं तत्त्वं त्वं तदाऽऽप्नोष्यसंशयम् ॥ १५ ॥

अत्यन्ताभावसंपत्त्या जगतश्चैतदाप्यते ।”
इत्युक्त्वा सहसा लीला निर्विकल्पसमाधिभाक् ॥ १६ ॥

संत्यज्याथ स्वकं देहं अन्तःकरणपञ्जरम् ।
ददर्श खस्था भर्तारं आस्थाने बहुराजके ॥ १७ ॥

सिंहासनसमारूढं प्राक्तन्या जरसोज्झितम् ।
द्विरष्टवर्षं भूपालं दृष्ट्वा सा विस्मयं ययौ ॥ १८ ॥

निजान्तःपुरमागत्य देवीं सस्मार भक्तितः ।
पृष्टा देवी तदा प्राह सर्गस्य भ्रान्तिमात्रताम् ॥ १९ ॥

2 पूर्ववृत्तान्तः ।

देव्युवाच—

अस्ति कश्चित् चिदाकाशे क्वचित् संसारमण्डपः ।
तत्र वसिष्ठनामासीत् कश्चित् धर्मपरो द्विजः ॥ २० ॥

तुल्यशीलवयोवेषा तस्य भार्या ह्यरुन्धती ।
कदाचित् स ददर्शाधः परिवारयुतं नृपम् ॥ २१ ॥

“अहो भूपालता रम्या सर्वसौभाग्यलालिता ।
कदा स्यां अहमप्येवं” इति संकल्पवानभूत् ॥ २२ ॥

आसन्नमरणस्यास्य भार्या मां शरणं गता ।
त्वद्वत् सा प्रार्थयामास “जीवो भर्तुः मृतस्य मे ॥

मायासीत् मण्डपादस्मात्" तथैवाङ्गीकृतं मया ।
मृतः स प्राक्तनानल्पसंकल्पात् अभवत् नृपः ॥ २४ ॥

तस्मिन्नेव चिदाकाशे जीवाकाशतया स्थितः ।
शोकेन कर्शिता साध्वी देहमुत्सृज्य दूरतः ॥ २५ ॥

आतिवाहिकदेहेन सा भर्तारं उपाययौ ।
त्वमेव सा स ते भर्ता द्विजो भूपत्वमागतः ॥ २६ ॥

प्राक्तनी सा स्मृतिर्लुप्ता युवयोरुदिताऽन्यथा ।
स्वप्ने जाग्रत्स्मृतिर्यद्वत्, मृतेरद्याष्टमं दिनम् ॥ २७ ॥

देशदैर्घ्यं यथा नास्ति कालदैर्घ्यं तथा न हि ।
एतस्याहं पितुः पुत्रो वर्षाण्येतानि सन्ति मे ॥ २८ ॥

इति भ्रान्तिः जगत्यत्र मृतिमोहात् अनन्तरम् ।
एवं देव्याः वचः श्रुत्वा लीला प्रोचे सरस्वतीम् ॥

सर्गं ब्राह्मणदम्पत्योः तं मां नय महेश्वरि ।
एवमुक्ता तु सा प्राह "देहं मुक्त्वा भवामला ॥ ३० ॥

अचेत्यचिद्रूपमयी परमां पावनीं दृशम् ।
अवलम्ब्य च पश्यावः सह सर्गमनर्गलम् ॥ ३१ ॥

आतिवाहिक एवायं त्वादृशैः चित्तदेहकः ।
आधिभौतिकया बुद्ध्या गृहीतः चिरभावनात् ॥ ३२ ॥

वासनातानवं नूनं यदा ते स्थितिमेष्यति । ”
तदाऽऽतिवाहिको भावः पुनरेष्यति देहके ॥ ३३ ॥

वासनातानवे तस्मात् कुरु यत्नं अनिन्दिते ।
तस्मिन् प्रौढिं उपायाते जीवन्मुक्ता भविष्यसि ” ॥३४॥

3 ब्रह्माभ्यासः ।

लीलोवाच —

अत्रोपकुरुते ब्रूहि कोऽभ्यासः कीदृशोऽथवा ।
स कथं पोषमायाति पुष्टे तस्मिंश्च किं भवेत् ॥ ३५ ॥

देव्युवाच —

तच्चिन्तनं तत्कथनं अन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च तदभ्यासं विदुर्बुधाः ॥ ३६ ॥

अत्यन्ताभावसंपत्तौ ज्ञातुः ज्ञेयस्य वस्तुनः ।
युक्त्या शास्त्रैः यतन्ते ये ते ब्रह्माभ्यासिनः स्थिराः ॥

सर्गादावेव नोत्पन्नं दृश्यं नास्त्येव तत् सदा ।
इदं जगत् अहं चेति बोधाभ्यासं विदुः परे ॥ ३८ ॥

दृश्यासंभवबोधेन रागद्वेषादितानवे ।
रतिः बलोदिता याऽसौ ब्रह्माभ्यासः स उच्यते ॥ ३९ ॥

तदभ्यासेन निर्वाणं इत्यभ्यासो महोदयः ।
संभाष्यैवं निशायां ते निर्विकल्पसमाधिना ॥ ४० ॥

बभूवतुः चिदाकाशरूपिण्यौ व्योमगाकृती ।
दूरात् दूरं अभिप्लुत्य ततो ब्रह्माण्डमण्डलात् ॥ ४१ ॥

निर्गत्यान्यत् अनुप्राप्ते मण्डलं ब्राह्मणास्पदम् ।
तदा तस्यास्तु संकल्पात् तत्रत्याः ददृशुस्त्विमे ॥ ४२ ॥

"नमोऽस्तु वनदेवीभ्यां" इत्युक्त्वा कुसुमाञ्जलिम् ।
तत्याज ज्येष्ठशर्माऽथ सार्धं गृहजनेन सः ॥ ४३ ॥

पुत्रं सा मूर्ध्नि पस्पर्श तेन सर्वे शुचं जहुः ।
तत् दृष्ट्वा पुनरायाता लीला देवीमपृच्छत ॥ ४४ ॥

मृतस्य भर्तुर्जीवोऽसौ यत्र राज्यं करोति मे ।
तत्राहं किं न तैर्दृष्टा दृष्टाऽस्मीह सुतेन किम् ॥ ४५ ॥

देव्युवाच —

अभ्यासेन विना वत्से तदा ते द्वैतनिश्चयः ।
नास्तङ्गतोऽभवत् सत्यसंकल्पत्वमभूत् न च ॥ ४६ ॥

अद्यासि सत्यसंकल्पा फलितं ते यदीप्सितम् ।

लीलोवाच —

अहो मया स्मृतान्यद्य पूर्वजन्मशतानि मे ॥ ४७ ॥

सुभ्रान्तं हि मया पूर्वं नानाविधासु योनिषु ।

4 अनन्तरवृत्तान्तः ।

वसिष्ठ उवाच —

एवमाकथयन्तौ ते प्राप्य सर्गं द्वितीयकम् ॥ ४८ ॥

अन्तःपुरे ददृशतुः राजानं शवतां गतम् ।
ततः पुनः विनिर्गत्य ददृशतुः भयानकम् ॥ ४९ ॥

सेनयोः शस्त्रसंपातं, युद्धे चोपरते निशि ।
विदूरथाख्यभूपस्य देव्यौ विविशतुः गृहम् ॥ ५० ॥

प्रबुध्य च तदा राजा संददर्शाङ्गनाद्वयम् ।
उत्पत्य शयनात् भक्त्या सोऽर्पयत् कुसुमाञ्जलिम् ॥५१॥

"राजन् स्मर विवेकेन पूर्वजातिं" इति स्वयम् ।
वदन्ती मूर्ध्नि पस्पर्श तं करेण सरस्वती ॥ ५२ ॥

अथ हार्दं तमो माया राज्ञोऽस्य क्षयमाययौ ।
सस्मार पूर्ववृत्तान्तं अन्तः स्फुरदिव स्थितम् ॥ ५३ ॥

"हे देव्यौ किमिदं नाम दिनमेकं मृतस्य मे ।
अद्येह समतीतानि वर्षोवर्षाणि सप्ततिः" ॥ ५४ ॥

इति पृष्टे तदा देव्यौ राज्ञा विस्मितचेतसा ।

देव्युवाच —

यथा स्वप्ने मुहूर्ते तु संवत्सरशतभ्रमः ॥ ५५ ॥

तव मायाविलासेन तथाऽयं जाग्रति भ्रमः ।
वस्तुतस्तु न जातोऽसि न मृतोऽसि कदाचन ॥ ५६ ॥

शुद्धविज्ञानरूपस्त्वं दीर्घस्वप्न इदं जगत् ।

राजोवाच —

अहं देहमिमं त्यक्त्वा पूर्वदेहं लभे कदा ॥ ५७ ॥

देव्युवाच —

अस्मिन् रणे तु मर्तव्यं ततः प्राप्तासि पूर्वकम् ।
एतस्मिन् प्रस्तुते श्रुत्वा शत्रुणा पीडितं पुरम् ॥ ५८ ॥

राजा विदूरथो देव्यौ युद्धाय यास्यतो मम ।
रक्ष्यतामियं भार्येति प्रोच्य युद्धाय निर्ययौ ॥ ५९ ॥

लीला लीलां ददर्शान्यां स्वाकारसदृशाकृतिम् ।
ततो वीरगणैः साकं गत्वा समरभूतले ॥ ६० ॥

प्रयुध्यंस्तु हतो राजा प्रतिराजेन संयुगे ।

4 पुनरागमनम् ।

मूढं भर्तारमालोक्य लीलाऽनुगमनेच्छया ॥ ६१ ॥

ब्रह्मादिस्थानमाक्रम्य प्राप चिद्गगनान्तरम् ।
पत्तने तत्र पद्मस्य देवीशक्त्युपबृंहिता ॥ ६२ ॥

मण्डपे पुष्पगुप्तस्य शवस्य निकटे स्थिता ।
राज्ञो जीवकला लीला देवी चेति त्रयं ततः ॥ ६३ ॥

सर्गात् सर्गान्तरं गत्वा पद्मराजस्य मण्डपे ।
शवपार्श्वस्थितां लीलां ददर्श पूर्वमागताम् ॥ ६४ ॥

लीलोवाच —

देवि स प्राक्तनो देहः कथं मम न दृश्यते ।

देव्युवाच —

समाधौ त्वयि लीनायां निर्जीवं ते कलेवरम् ॥ ६५ ॥

चन्दनदारुभिः दग्धं चितौ निक्षिप्य मन्त्रिभिः ।
आतिवाहिकदेहाऽसि वासनायाः परिक्षयात् ॥ ६६ ॥

आवां तावदियं लीला पश्यत्वित्येव चिन्तिते ।
उत्थाय संभ्रमात् दृष्ट्वा तयोः पादेषु साऽपतत् ॥ ६७ ॥

उत्थापयामो नृपतिं शवतल्पात् इमं पुनः ।
इति जीवकलां देवी नासिकायां न्यवेशयत् ॥ ६८ ॥

क्रमात् अङ्गानि सर्वाणि सरसानि चकाशिरे ।
उत्तस्थौ स लसत्कायः पप्रच्छ विस्मितः तदा ॥ ६९ ॥

"का त्वं केयं कुतश्चेयं", तस्मै लीलाऽब्रवीत् वचः ।
"महिला तव लीलाऽहं प्राक्तनी सहधर्मिणी ॥ ७० ॥

इयं ते महिला लीला द्वितीया लीलया मया ।
उपार्जिता तवैवार्थे प्रतिबिम्बमयी शुभा ॥ ७१ ॥

एषा सरस्वती देवी त्रैलोक्यजननी शुभा" ।
इत्याकर्ण्य समुत्थाय ववन्दे स सरस्वतीम् ॥ ७२ ॥

"सर्वापदोऽपगच्छन्तु सन्त्वनन्तसुखानि वः" ।
इत्युक्त्वा च तदा देवी तत्रैवान्तर्धिमाययौ ॥ ७३ ॥

लीला लीला च राजा च जीवन्मुक्ता महाधियः ।
काले विदेहमुक्तत्वं आसेदुः देव्यनुग्रहात् ॥ ७४ ॥

एतत्ते कथितं राम दृश्यदोषनिवृत्तये ।
लीलोपाख्यानमनघं घनतां जगतः त्यज ॥ ७५ ॥

इति श्रीवासिष्ठसंग्रहे लीलोपाख्यानं नाम
चतुर्थः सर्गः ॥

---

॥ पञ्चमः सर्गः ॥

---

## ॥ सूच्युपाख्यानम् ॥

### 1 सूचीतपः ।

वसिष्ठ उवाच —

असदाभासमच्छात्म ब्रह्मास्ति परमं पदम् ।
ब्रह्मणः स्फुरणं किञ्चित् तं जीवं विद्धि राघव ॥ १ ॥

तदेव घनसंवित्त्या यात्यहंतां अनुक्रमात् ।
संकल्पोन्मुखतां यातस्त्वहङ्कारो भवत्यपि ॥ २ ॥

चित्तं चेतो मनो माया प्रकृतिश्चेति नामभाक् ।
दीर्घस्वप्नस्थितिं यातः संसाराख्यो मनोवशात् ॥ ३ ॥

असम्यग्दर्शनात् स्थाणौ इव पुंस्प्रत्ययो दृढः ।
चिदात्मजीवयोः भेदो नैवैवं जीवचित्तयोः ॥ ४ ॥

न चित्तसर्गयोर्वाऽपि कोऽपि भेदः कथञ्चन ।
अत्रैवोदाहरन्तीमं इतिहासं पुरातनम् ॥ ५ ॥

हिमाद्रेरभवत् पार्श्वे कर्कटी नाम राक्षसी ।
तस्या विपुलकायत्वात् दुर्लभत्वात् निजान्धसः ॥ ६ ॥

न कदाचन सा तृप्तिं उपयाता महोदरी ।
जम्बूद्वीपगतान् सर्वान् निगिरामीति निश्चिता ॥ ७ ॥

व्यवस्थिता तपः कर्तुं तां पितामह आययौ ।

राक्षस्युवाच —

भगवन् भूतभव्येश स्यामहं जीवसूचिका ॥ ८ ॥

पितामह उवाच —

एवमस्तु तथा हि त्वं भविष्यसि विषूचिका ।
दुर्भोजनाः दुरारम्भाः मूर्खाः दुःस्थितयश्च ये ॥ ९ ॥

दुर्देशवासिनो दुष्टाः तेषां व्याधिः भविष्यसि ।
अथ सूक्ष्मशरीरा सा प्राणिप्राणैकघातिनी ॥ १० ॥

बभूव बहुवर्षाणि ततः साऽचिन्तयत् स्वयम् ।
सूचीयं रक्तमांसानां कणमात्रेण पूर्यते ॥ ११ ॥

क्व मे तानि विशालानि गतान्यङ्गानि दुर्धियः ।
इति संचिन्त्य भूयोऽपि तपस्तेपे सुदारुणम् ॥ १२ ॥

बभूव निर्मला साऽपि तपसा क्षीणकल्मषा ।
तस्थौ साऽखिलसंसारहेयतां हृदि कुर्वती ॥ १३ ॥

तां वेधाः तादृशीं ज्ञात्वा समुपेत्य वचोऽब्रवीत् ।
जीवन्मुक्ताऽसि हे वत्से हार्दं ते गलितं तमः ॥ १४ ॥

पुरातनवपुः प्राप्य सुखिनी भुवने चर ।
एवमुक्त्वा चिरं तस्थौ निर्विकल्पसमाधिना ॥ १५ ॥

## 2 सूचीकृतप्रश्नः ।

अथ कालेन महता चित्तस्पन्दनमेत्य सा ।
बहिर्वृत्तिमयी भूत्वा सस्मार च पुनः क्षुधाम् ॥ १६ ॥

प्राप्तुं आत्मोचिताहारं अटव्यां न्यवसत् तदा ।
एतस्मिन्नन्तरे तत्र मन्त्रिणा सह भूपतिम् ॥ १७ ॥

रजन्यां संप्रविष्टं सा विलोक्याचिन्तयत् भृशम् ।
"अपि नंक्ष्यामि देहेन नैव भोक्ष्ये गुणान्वितम् ॥ १८ ॥

तस्मादिमौ परीक्ष्येऽहं कयाचित् प्रश्नलीलया" ।
इति निश्चित्य सा घोरं विनद्योवाच राक्षसी ॥ १९ ॥

"कौ भवन्तौ इदानीं मे ह्याहारार्थं समागतौ ।
एकोपायेन मत्पार्श्वात् बालकौ उत्तरिष्यथः ॥ २० ॥

मत्प्रश्नपञ्जरं सारं चेत् विदारयथो धिया" ।
कथ्यतामिति राज्ञोक्ता साऽपृच्छत् राक्षसी तदा ॥ २१

सूच्युवाच —

एकस्यानेकसंख्यस्य कस्याणोः अम्बुधेरिव ।
अन्तर्ब्रह्माण्डलक्षाणि लीयन्ते बुद्बुदा इव ॥ २२ ॥

किमाकाशं अनाकाशं न किंचित् किंचिदेव किम् ।
गच्छन्न गच्छति च कः कोऽतिष्ठन्नेव तिष्ठति ॥ २३ ॥

कश्चेतनोऽपि पाषाणः कश्च व्योमनि चित्रकृत् ।
अणौ जगन्ति तिष्ठन्ति कस्मिन् बीज इव द्रुमः ॥ २४

कस्मान्न च पृथक् किंचित् द्वैतमप्यपृथक् कुतः ।

3 सूचीसमाधानम् ।

मन्त्र्युवाच —

भवत्या परमात्मैव कथितो बोधरीतितः ॥ २५ ॥

अनाख्यत्वात् अगम्यत्वात् आकाशादपि सूक्ष्मकः ।
ब्रह्माण्डबुद्बुदाः तस्मिन् लीयन्ते शक्तिपर्ययात् ॥ २६

आकाशं बाह्यशून्यत्वात् अनाकाशं च चित्त्वतः ।
अकिंचिदित्यनिर्देश्यं वस्तुसच्चेति किंचन ॥ २७ ॥

चेतनोऽसौ प्रकाशात्मा वेद्याभावात् भवेत् शिला ।
आत्मनि व्योमनि स्वच्छे जगदुन्मेषचित्रकृत् ॥ २८ ॥

इदं तद्भावमात्रत्वात् विश्वं न स्यात् ततः पृथक् ।
जगद्भेदोऽपि तद्भानं इति भेदोऽपि तन्मयः ॥ २९ ॥

सर्वगः सर्वसंबद्धो गत्यभावात् न गच्छति ।
नास्त्यसौ आश्रयाभावात् सद्रूपत्वात् अथास्ति च ॥

राजोवाच —

यत्संकोचविकासाभ्यां जगत्प्रलयसृष्टयः ।
निष्ठा वेदान्तवाक्यानां अथ वाचामगोचरः ॥ ३१ ॥

सन्मात्रं तत् त्वया भद्रे कथ्यते ब्रह्म शाश्वतम् ।

राक्षस्युवाच —

अहो बत पवित्रेयं भवतोर्भाति शेमुषी ॥ ३२ ॥

पूजनीयौ युवां नूनं कथ्यतां मे त्वदीहितम् ।

राजोवाच —

भूयो भवत्या न प्राणाः हिंसनीयाः कदाचन ॥ ३३ ॥

राक्षस्युवाच —

आशरीरपरित्यागं इतः प्रभृति नो मया ।
हिंसनीयाः परप्राणाः पश्यन्त्या सर्वगं शिवम् ॥ ३४ ॥

आमृतिं धारणां बद्ध्वा क्षुधां न गणयाम्यहम् ।

राजोवाच —

आगच्छास्मद्गृहं भद्रे दिव्यस्त्रीरूपधारिणी ॥ ३५ ॥

ततो दुष्कृतिनश्चौरान् वध्यान् शतसहस्रशः ।
मण्डलेभ्यः समाहृत्य दास्यामि तव भोजनम् ॥ ३६ ॥

कान्तारूपं परित्यज्य गृहीत्वा तानशेषतः ।
गत्वा च हिमवच्छृङ्गं तत्र भुङ्क्ष्व यथासुखम् ॥ ३७ ॥

तृप्तिं निद्रां ततो लब्ध्वा भव भूयः समाधिभाक् ।
समाधिविरता भूयः एवमेव समाचर ॥ ३८ ॥

ततः प्रभृति साऽद्यापि किरातजनमण्डले ।
वध्यान् आगत्य गृह्णाति समाधेः व्युत्थिता सती ॥ ३९ ॥

इति श्रीवासिष्ठसंग्रहे सूच्युपाख्यानं नाम
पञ्चमः सर्गः ॥

॥ षष्ठः सर्गः ॥

# ॥ भावनावैभवम् ॥

## 1 ऐन्दवोपाख्यानम् ।

वसिष्ठ उवाच —

इदं ऐन्दवमाख्यानं शृणु राम शुभावहम् ।
चितिशक्तिसमुल्लासं निश्चिनोषि जगत् यतः ॥ १ ॥

प्रजाः स्रष्टुं दृशौ स्फारे व्योम्नि योजितवान् अजः ।
तत्रासौ दृष्टवान् सर्गान् पृथग्भूतान् अनेकशः ॥ २ ॥

सूर्यं तस्मात् जगज्जालात् एकमानीय पृष्टवान् ।
"कस्त्वं कथमिदं जातं जगज्जालं वदानघ" ॥ ३ ॥

इत्युक्तो भास्करः प्राह "जम्बुद्वीपैककोणके ।
इन्दुनामाऽतिशान्तात्मा कश्यपस्य कुलोद्भवः ॥ ४ ॥

तस्य प्राणसमा भार्या, न बभूवात्मजस्तयोः ।
तेपतुस्तौ तपो घोरं पुत्रार्थं व्रतनिष्ठितौ ॥ ५ ॥

वरं विप्र गृहाणेति तुष्टः प्रोवाच शंकरः ।
दश पुत्रान् ययाचे सः तथैव चाप्तवान् वरम् ॥ ६ ॥

जातास्ते क्रमशो बालाः कालेन प्रौढिमाययुः ।
मृतौ च पितरौ दृष्ट्वा गृहं संत्यज्य खेदिनः ॥ ७ ॥

किमिह स्यात् परं श्रेयः इति संचिन्त्य सोदरान् ।
ज्येष्ठः प्रोवाच ब्रह्मत्वं आकल्पान्ताविनाशि यत् ॥ ८ ॥

तदेव रोचते मह्यं ब्रह्माऽहमिति चेतसा ।
सृजामि संहरामीति ध्यानमस्तु चिराय वः ॥ ९ ॥

अथ ते ब्राह्मणा एवं बद्धब्रह्मात्मभावनाः ।
तेषां देहास्तु कालेन गलिताः शीर्णपर्णवत् ॥ १० ॥

भावनापरिपाकेन दश ते ब्रह्मतां गताः ।
स तेषां दशधा सर्गप्रतिभासोऽयमुत्थितः ॥ ११ ॥

एषामन्यतमस्याहं भास्करोऽस्मि पितामह ।"
सामान्या ब्राह्मणा भूत्वा मनोभावनया किल ॥ १२ ॥

ऐन्दवाः ब्रह्मतां प्राप्ताः मनसः पश्य शक्तताम् ।

2 विटोपाख्यानम् ।

मनसा भाव्यमानो हि देहितां याति देहकः ॥ १३ ॥

देहभावनया मुक्तो देहधर्मैः न बाध्यते ।
इन्द्रद्युम्न इति ख्यातः मागधेषु महीपतिः ॥ १४ ॥

अहल्या नाम तस्यासीत् भार्या कमललोचना ।
इन्द्रनामा विटः कश्चित् तस्मिन्नेव पुरेऽवसत् ॥ १५ ॥

साऽहल्याऽहल्यया सार्धं इन्द्रस्य यदभूत् पुरा ।
तदाकर्ण्येतिहासेभ्यः तस्मिन्निन्द्रेऽन्वरज्यत ॥ १६ ॥

एवमन्योन्यमासक्तं भावमालोक्य भूपतिः ।
तावुभावपि तत्याज दुर्मती सलिलाशये ॥ १७ ॥

तौ तु जहसतुस्तुष्टौ न खेदमुपजग्मतुः ।
ग्रथितौ गजपादेषु कशाभिः ताडितावपि ॥ १८ ॥

ज्वालाभिः दह्यमानौ च नापतुः कामपि व्यथाम् ।
राज्ञाऽथ पृच्छयमानौ तौ ऊचतुर्मुदिताशयौ ॥ १९ ॥

"आवां खेदं न जानीवो जातावन्योन्यतन्मयौ ।
आवितं तीव्रवेगेन मनसा यत् महीपते ॥ २० ॥

तदेव पश्यत्यखिलं न शरीरविचेष्टितम् ।"
एवमुक्तस्ततो राजा वचः कामान्धयोरपि ॥ २१ ॥

सत्यमेवेति विज्ञाय तावुभौ निरवासयत् ।
एवं राम जगत्यस्मिन् द्विशरीराः शरीरिणः ॥ २२ ॥

एकं मनःशरीरं तु क्षिप्रकारि चलं सदा ।
अकिंचित्करमन्यच्च शरीरं मांसनिर्मितम् ॥ २३ ॥

### 3 चित्तोपाख्यानम् ।

अत्र किंचिदुपाख्यानं चित्तस्य कथयामि ते ।
अस्ति शून्याऽटवी भीमा तस्यामेकोऽभवन्नरः ॥ २४ ॥

पर्याकुलमतिर्भीमः सहस्रकरलोचनः ।
प्रहरन् आत्मनः पृष्ठे स्वात्मना परिघैर्भृशम् ॥ २५ ॥

क्रन्दन् पलायमानोऽसौ पतितोऽन्धोऽन्धकूपके ।
ततः समुत्थितः काले प्रविष्टः कण्टकाटवीम् ॥ २६ ॥

ततः पुनः विनिष्क्रम्य स्वात्मानं प्रहरन् मुहुः ।
विद्रुवन् शीतलं गत्वा कदलीकाननं हसन् ॥ २७ ॥

क्षणात् तस्मात् विनिष्क्रम्य मुहुश्च प्रहरन् स्वयम् ।
विद्रुतः पतितो भूयः तस्मिन्नेवान्धकूपके ॥ २८ ॥

एवंरूपनिजाचारं समालोक्य चिरं मया ।
अवष्टभ्य बलादेव मुहूर्तं प्रतिबोधितः ॥ २९ ॥

पृष्टश्च किमिदं कस्त्वं किं मुधा परिधावसि ।
इति पृष्टः स च प्राह नाहं कश्चित् करोमि न ॥ ३० ॥

त्वं मे शत्रुः त्वया दृष्टो नष्टोऽस्मीति रुरोद सः ।
प्रहसन् अथ तत्याज स्वान्यङ्गानि समन्ततः ॥ ३१ ॥

एवं तस्मिन् महारण्ये बहवः तादृशा नराः ।
परिभ्रमन्तः तिष्ठन्ति विद्यतेऽद्यापि साऽटवी ॥ ३२ ॥

श्रीराम उवाच—

काऽसौ महाटवी ब्रह्मन् किं वा ते कर्तुमुद्यताः ।

वसिष्ठ उवाच —

संसाराख्ये महारण्ये प्रभ्रमन्ति मनांसि हि ॥ ३३ ॥

मया तानि विवेकेन नीयन्ते परमं शमम् ।
कानिचित् मत्तिरस्कारात् नरकेषु पतन्त्यधः ॥ ३४ ॥

कदलीकाननं स्वर्गः दुःखबाधस्तु कण्टकः ।
नष्टोऽस्मीति यदुक्तं तत् ममतापरिदेवनम् ॥ ३५ ॥

मनसः त्यजतो भोगान् रोदनं सहजं खलु ।
परिप्राप्तविवेकस्य त्यक्तसंसारसंस्थितेः ॥ ३६ ॥

चेतसः त्यजतो रूपं आनन्दो हसितं भवेत् ।
प्रहाराः कल्पनाघाताः क्रियन्ते स्वयमेव हि ॥ ३७ ॥

संकल्पवासनाजालैः स्वैरेवायाति बन्धनम् ।
मनो लीलामयैः बन्धैः कोशकारकृमिर्यथा ॥ ३८ ॥

एतत्ते कथितं राम चित्तोपाख्यानमुत्तमम् ।
चित्तेनैवेदमालोक्य चित्तत्यागे स्थिरो भव ॥ ३९ ॥

### 4 बालकाख्यायिका ।

सर्वशक्ति परं ब्रह्म नित्यमापूर्णमव्ययम् ।
ययोल्लसति शक्त्यासौ प्रकाशं सोऽधिगच्छति ॥ ४० ॥

चिच्छक्तिः तस्य देहेषु जडशक्तिः तथोपले ।
स्पन्दशक्तिश्च वातेषु द्रवशक्तिः जलेषु च ॥ ४१ ॥

शून्यशक्तिः तथाऽऽकाशे नाशशक्तिः विनाशिषु ।
तेजःशक्तिः तथा वह्नौ स्फुटमेवोपलभ्यते ॥ ४२ ॥

फलपल्लवलतापुष्पशाखाविटपमूलवान् ।
वृक्षबीजे यथा वृक्षः तथेदं ब्रह्मणि स्थितम् ॥ ४३ ॥

क्वचित् क्वचित् कदाचिच्च तस्मा उद्यन्ति शक्तयः ।
देशकालादिवैचित्र्यात् क्ष्मातलादिव शालयः ॥ ४४ ॥

प्रपञ्चोत्पत्तिरेवं हि बालकाख्यायिकाक्रमात् ।
राजपुत्राः त्रयः सन्ति शूरा असति पत्तने ॥ ४५ ॥

द्वौ न जातौ तथैकस्तु गर्भ एव हि न स्थितः ।
एकदोत्तमलाभार्थं निर्गत्य फलशालिनः ॥ ४६ ॥

ददृशुः गगने वृक्षान् भुक्त्वा स्वादु च तत्फलम् ।
सरित्त्रितयमासेदुः पथि कल्लोलमालितम् ॥ ४७ ॥

तत्रैका परिशुष्कैव मनागप्यम्बु न द्वयोः ।
तत्र स्नात्वा जलक्रीडां कृत्वा पीत्वा पयस्ततः ॥ ४८ ॥

आसेदुस्ते दिनस्यान्ते भविष्यन्नगरं त्रयः ।
ददृशुस्तत्र रम्याणि त्रीण्येते भवनानि च ॥ ४९ ॥

एकं निर्भित्ति निःस्तम्भं अनुत्पन्नं गृहद्वयम् ।
आपुः स्थालीत्रयं तत्र तप्तकाञ्चनकल्पितम् ॥ ५० ॥

तत्र कर्परतां याते द्वे एका चूर्णतां गता ।
तस्यां द्रोणत्रयं पक्वं न्यूनं द्रोणत्रयेण तु ॥ ५१ ॥

अन्नं प्राप्य द्विजैर्भुक्तं निर्मुखैः बहुभोजिभिः ।
अवशिष्टं ततो भुक्त्वा राजपुत्राः त्रयो हि ते ॥ ५२ ॥

सुखमेव स्थितास्तत्र मृगयाव्यवहारिणः ।
धात्र्या हि कथितामेतां निर्विचारधिया यथा ॥ ५३ ॥

बालो निश्चयमायाति विचारोज्झितचेतसाम् ।
इयं संसाररचनाऽव्यवस्थितिमुपागता ॥ ५४ ॥

इति श्री वासिष्ठसंग्रहे भावनावैभवं नाम
षष्ठः सर्गः ॥

---

॥ सप्तमः सर्गः ॥

## ॥ लवणोपाख्यानम् ॥

1 शाम्बरिकेन मोहनम् ।

वसिष्ठ उवाच —

स्वसंकल्पवशात् मूढो मोहमेति न पण्डितः ।
विचारय धिया सत्यं असत्यं च परित्यज ॥ १ ॥

मनःप्रशमने राम मोक्ष एवावशिष्यते ।
अत्र ते शृणु वक्ष्यामि वृत्तान्तमिममुत्तमम् ॥ २ ॥

लवणो नाम भूपालः आसीत् परमधार्मिकः ।
तत्सभां एकदा कश्चित् साटोपं इन्द्रजालिकः ॥ ३ ॥

प्रविश्य नत्वा भूपालं 'राजन्नेतां विलोकय' ।
इत्युक्त्वा भ्रामिता तेन पिञ्छिका भ्रमदायिनी ॥ ४ ॥

ततः सैन्धवसामन्तो विवेशाश्वयुतः सभाम् ।
राजानं च तदा प्रोचे प्रीत्या स इन्द्रजालिकः ॥ ५ ॥

'सदश्वमेनमारुह्य भुवनं विहर प्रभो' ।
अथानिमिषया दृष्ट्या राजाश्वमवलोकयन् ॥ ६ ॥

तस्थौ मुहूर्तयुग्मं तु ध्यानासक्त इवात्मनि ।
ततस्ते विस्मयापन्नाः ययुश्चिन्तां सभासदः ॥ ७ ॥

बभूवासौ प्रबुद्धोऽथ पर्याकुलमतिः नृपः ।
सम्यक् प्राप्तप्रबोधश्च प्रोवाच मन्त्रिणस्तदा ॥ ८ ॥

राजोवाच—

इदमाश्चर्यमाख्यानं शृणुताद्य सभासदः ।
पिञ्छिकां अहमालोक्य जाल्मेन भ्रामितामिमाम् ॥ ९ ॥

अश्वं आरूढवान् एनं आत्मना भ्रान्तमानसः ।
प्रवृत्तो मृगयां गन्तुं दूरं नीतोऽस्मि वाजिना ॥ १० ॥

संप्राप्तोऽहं अपर्यन्तं अरण्यं श्रान्तवाहनः ।
आसूर्यास्तं दिनं तत्र प्रक्रम्य जाङ्गलं गतः ॥ ११ ॥

तत्र जम्बीरखण्डस्य स्कन्धसंसर्गिणीं लताम् ।
धृत्वा प्रलम्बमानं मां त्यक्त्वा यातः तुरङ्गमः ॥१२॥

तत्र कल्पसमा रात्रिः मोहमग्नस्य मे गता ।
अथाष्टभागमापन्ने व्योम्नो दिवसनायके ॥ १३ ॥

दृष्टा मया प्रभ्रमता बालिकौदनधारिणी ।
याचिताऽपि मया यत्नात् नान्नं दत्तवती ह सा ॥१४॥

'विद्धि मामिह चण्डालीं मत्तो नाश्नोषि भोजनम् ।
ददामि भोजनं तुभ्यं भर्ता भवसि चेत् मम' ॥ १५ ॥

अथोक्ता सा मया भर्ता भवामीति ततः तया ।
दत्तं अन्नं मया भुक्तं वर्णजातिकुलक्रमाः ॥ १६ ॥

केनापदि विचार्यन्ते मोहापहृतचेतसा ।
बहुनाऽत्र किमुक्तेन स्वीकृता सा मया ततः ॥ १७ ॥

क्रमात् गर्भवती भूत्वा प्रसूता कन्यकाद्वयम् ।
तथा पुत्रद्वयं चैव जातोहं पुष्टपुल्कसः ॥ १८ ॥

चण्डालत्वे स्थिरीभूते भूपत्वं मम विस्मृतम् ।
एवं तत्र मया नीताः षष्टिः कल्पसमाः समाः ॥ १९ ॥

एवं मयि स्थिते तत्र नवश्वशुरमन्दिरे ।
आसीत् तत्राथ दुर्भिक्षं गताः सर्वे सुहृज्जनाः ॥ २० ॥

अहं दुःखादपत्यैस्तु तया च सहितः शनैः ।
कृच्छ्रात् देशाद् विनिर्गत्य विश्रान्तोऽस्मि तरोस्तले ॥

कनीयान् बालको मां च मांसं देहीत्ययाचत ।
दुःखं सोढुं अशक्तोऽहं मरणे कृतनिश्चयः ॥ २२ ॥

तत्र काष्ठानि संचित्य चितायां पतितोऽस्म्यहम् ।
चलितोऽस्मि जवात् तावत् प्रबुद्धोऽहं इह स्थितः ॥ २३ ॥

एवं शाम्बरिकेणायं मोह उत्पादितो मम ।
इत्युक्तवति राजेन्द्रे मायावी स तिरोदधे ॥ २४ ॥

अथेदमूचुस्ते सभ्याः विस्मयोत्फुल्ललोचनाः ।
नायं शाम्बरिको देव यस्य नास्ति धनेषणा ॥ २५ ॥

दैवी काचन मायेयं संसारस्थितिबोधिनी ।

2 संसारविभ्रमः ।

वसिष्ठ उवाच—

चण्डालत्वं हि लवणे प्रतिभासवशाद्यथा ॥ २६ ॥

तथेदं जगदाभोगि मनोमननमात्रकम् ।
संयमात् मनसः शान्तिं एति संसारविभ्रमः ॥ २७ ॥

स्वपौरुषैकसाध्येन स्वेप्सितत्यागरूपिणा ।
मनःप्रशममात्रेण विना नास्ति शुभा गतिः ॥ २८ ॥

असङ्कल्पनशस्त्रेण छिन्नं चित्तं गतं यदा ।
सर्वं सर्वगतं शान्तं ब्रह्म संपद्यते तदा ॥ २९ ॥

अयं सोऽहं इदं तत् मे एतावन्मात्रकं मनः ।
परं पौरुषमाश्रित्य नीत्वा चित्तं अचित्तताम् ॥ ३० ॥

तां महापदवीमेहि यत्र नाशो न विद्यते ।
न हि चञ्चलताहीनं मनः क्वचन दृश्यते ॥ ३१ ॥

चञ्चलत्वं मनोधर्मो वह्नेः धर्मो यथोष्णता ।
विबोधैकानुसन्धानात् चिदंशात्मतया मनः ॥ ३२ ॥

चिदेकतां उपायाति दृढाभ्यासवशादिह ।
अतः पौरुषमाश्रित्य चित्तं आक्रम्य चेतसा ॥ ३३ ॥

विशोकं पदमालम्ब्य निरातङ्कः स्थिरो भव ।
मन एव समर्थं हि मनसो दृढनिग्रहे ॥ ३४ ॥

भोगौघवासनां त्यक्त्वा निर्विकल्पः सुखी भव ।
एष एव मनोनाशः त्वविद्यानाश उच्यते ॥ ३५ ॥

इच्छामात्रं अविद्येयं तन्नाशो मोक्ष उच्यते ।
स चासङ्कल्पमात्रेण सिद्धो भवति नान्यथा ॥ ३६ ॥

नाहं ब्रह्मेति सङ्कल्पात् सुदृढात् बध्यते मनः ।
सर्वं ब्रह्मेति सङ्कल्पात् सुदृढात् मुच्यते मनः ॥ ३७ ॥

कृशोऽतिदुःखी बद्धोऽहं हस्तपादादिमानहम् ।
इति भावानुरूपेण व्यवहारेण बध्यते ॥ ३८ ॥

नाहं दुःखी न मे देहो देहादन्यः परोऽस्म्यहम् ।
इति निश्चयवानन्तः क्षीणाविद्यो विमुच्यते ॥ ३९ ॥

अहो नु चित्रं यत् सत्यं ब्रह्म तत् विस्मृतं नृणाम् ।
यत् असत्यं अविद्याख्यं तत् नूनं स्मृतिमागतम् ॥ ४०

श्रीराम उवाच—

लवणोऽसौ महाभागः प्राप्तवान् कथमापदम् ।

वसिष्ठ उवाच —

एकान्ते चोपविष्टेन लवणेन विचिन्तितम् ॥ ४१ ॥

पितामहो हरिश्चन्द्रो राजसूयस्य याजकः ।
अहं तस्य कुले जातः तं यजे मनसा मखम् ॥ ४२ ॥

इति संचिन्त्य मनसा दीक्षां च प्रविवेश सः ।
आहूय ऋत्विजो देवान् प्रज्वाल्याथ च पावकम् ॥४३

हुत्वा च द्विजपूर्वेभ्यो दत्वा सर्वस्वदक्षिणाम् ।
व्यबुध्यत दिनस्यान्ते स्व एवोपवने नृपः ॥ ४४ ॥

राजसूयस्य कर्तारः दुःखं यत् प्राप्नुवन्ति हि ।
तस्य दुःखस्य भोगाय शक्रेण गगनात् तदा ॥ ४५ ॥

प्रहितो देवदूतो हि राम शाम्बरिकाकृतिः ।
मनः कर्तृ फलं भुङ्क्ते तदेव न शरीरकम् ॥ ४६ ॥

3 अज्ञानभूमिकाः ।

स्वरूपावस्थितिः मुक्तिः तद्भ्रंशोऽहंत्ववेदनम् ।
एतत् संक्षेपतः प्रोक्तं यत् ज्ञत्वाज्ञत्वलक्षणम् ॥ ४७ ॥

अज्ञानभूमयः सप्त सप्त च ज्ञानभूमयः ।
बीजजाग्रत् तथा जाग्रत् महाजाग्रत् तथैव च ॥ ४८ ॥

जाग्रत्स्वप्नः तथा स्वप्नः स्वप्नजाग्रत् सुषुप्तकम् ।
इति सप्तविधो मोहः शृणु तस्य च लक्षणम् ॥ ४९ ॥

अनाख्यं चेतनं यत् स्यात् तस्यावस्था हि नूतना ।
भविष्यच्चित्तजीवादिनामशब्दार्थभाजनम् ॥ ५० ॥

बीजरूपं स्थितं जाग्रत् बीजजाग्रत् तत् उच्यते ।
परात् जातस्य जीवस्य त्वयं च्चाहं इदं मम ॥ ५१ ॥

इति यः प्रत्ययः स्वच्छः तत् जाग्रत् प्रागभावनात् ।
अयं सोऽहं इदं तत् मे इति जन्मान्तरोदितः ॥ ५२ ॥

पीवरः प्रत्ययः प्रोक्तो महाजाग्रत् इति स्फुटम् ।
अरूढं अथवा रूढं सर्वथा तन्मयात्मकम् ॥ ५३ ॥

यत् जाग्रतो मनोराज्यं जाग्रत्स्वप्नः स उच्यते ।
द्विचन्द्र-शुक्तिकारूप्य-मृगतृष्णादिभेदतः ॥ ५४ ॥

अभ्यासात् प्राप्य जाग्रत्त्वं स्वप्नोऽनेकविधो भवेत् ।
अल्पकालं मया दृष्टं एतन्नो नेति यत्र हि ॥ ५५ ॥

परामर्शः प्रबुद्धस्य स स्वप्नः इति कथ्यते ।
चिरसंदर्शनाभावात् अविस्पष्टबृहद्वपुः ॥ ५६ ॥

चिरकालानुवृत्तश्च स्वप्नो जाग्रदिवोदितः ।
स्वप्नजाग्रत् इति प्रोक्तो जाग्रत्यपि परिस्फुरन् ॥ ५७ ॥

षडवस्थापरित्यागे जडा जीवस्य या स्थितिः ।
भविष्यद्दुःखबोधाढ्या सौषुप्ती सोच्यते गतिः ॥ ५८

जगत् तस्यां अवस्थायां अन्धे तमसि लीयते ।
सप्तावस्था इति प्रोक्ताः मयाऽज्ञानस्य राघव ॥ ५९ ॥

एकैका शतशाखाऽत्र नानाविभवरूपिणी ।

4 ज्ञानभूमिकाः ।

ज्ञानस्य भूमिकानां त्वं अद्य निर्वचनं शृणु ॥ ६० ॥

किं मूढ इव तिष्ठामि प्रेक्ष्येऽहं शास्त्रसज्जनैः ।
वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः ॥ ६१ ॥

शास्त्रसज्जनसंपर्कवैराग्याभ्यासपूर्वकम् ।
सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥ ६२ ॥

विचारणाशुभेच्छाभ्यां इन्द्रियार्थेष्वसक्तता ।
याऽत्र सा तनुता भावात् प्रोच्यते तनुमानसा ॥ ६३ ॥

भूमिकात्रितयाभ्यासात् चित्तेऽर्थविरतेः वशात् ।
सत्यात्मनि स्थितिः शुद्धे सत्त्वापत्तिरुदाहृता ॥ ६४ ॥

दशाचतुष्टयाभ्यासात् असंसङ्गफलेन च ।
रूढसत्त्वचमत्कारा प्रोक्ताऽसंसक्तिनामिका ॥ ६५ ॥

भूमिकापञ्चकाभ्यासात् स्वात्मारामतया दृढम् ।
आभ्यन्तराणां बाह्यानां पदार्थानां अभावनात् ॥ ६६ ॥

चिरं परप्रयुक्तेन प्रयत्नेनावबोधनम् ।
पदार्थभावना नाम षष्ठी संजायते गतिः ॥ ६७ ॥

भूमिषट्कचिराभ्यासात् भेदस्यानुपलम्भतः ।
यत् स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः ॥ ६८ ॥

ये हि राम महाभागाः सप्तमीं भूमिकां गताः ।
आत्मारामा महात्मानः ते महत्पदमागताः ॥ ६९ ॥

जीवन्मुक्तेषु चैषा हि तुर्यावस्थेह विद्यते ।
विदेहमुक्तिविषयः तुर्यातीतमतः परम् ॥ ७० ॥

भूमिकासप्तकं चैतत् धीमतामेव गोचरः ।

5 अविद्यामाहात्म्यम् ।

एतत्ते कथितं राम ज्ञानं वै साप्तभौमिकम् ॥ ७१ ॥

त्वं माहात्म्यं अविद्यायाः पुनः शृणु रघूद्वह ।
लवणोऽसौ महीपालः तत्र दृष्ट्वा तथा भ्रमम् ॥ ७२॥

द्वितीये दिवसे गन्तुं प्रवृत्तस्तां महाटवीम् ।
स तत्र विहरन् तांस्तु स्वप्नवृत्तान् सकलानपि ॥ ७३॥

दृष्टवान् पृष्टवांश्चैव ज्ञातवांश्च विसिस्मिये ।
विलपन्तीं तदाऽरण्ये वृद्धां पप्रच्छ भूमिपः ॥ ७४॥

किं वृत्तं तव दुःखाय कान् वा त्वं अनुशोचसि ।
इति पृष्टा च सा प्राह पतिर्मे पुक्कसाधिपः ॥ ७५॥

आवयोश्च सुता प्राप दैवादिन्दुसमं पतिम् ।
सुखानि सा चिरं भुक्त्वा प्रसूता तनयाः सुतान् ॥७

केनचित्त्वथ कालेन ग्रामे दुर्भिक्षपीडिते ।
ते सर्वे हि गता दूरं पञ्चत्वं वा गता इति ॥ ७७॥

शोच्यांस्ताननुशोचन्त्यः तिष्ठामो भृशदुःखिताः ।
इति श्रुत्वोचितैः दानैः एतासां दुःखसंक्षयम् ॥ ७८॥

कृत्वा च विस्मयाविष्टो दृष्टलोकपरावरः ।
ज्ञाताविद्यास्वभावोऽसौ आजगाम गृहं नृपः ॥ ७९॥

श्रीराम उवाच —

कथमेतत् वद ब्रह्मन् स्वप्नः सत्यत्वमागतः ।
संशयो भगवन् सोऽयं न मे गलति चेतसः ॥ ८०॥

वसिष्ठ उवाच —

सर्वमेतत् अविद्यायां संभवत्येव राघव ।
असच्च सदिवाभाति स्वप्नेष्विव नभोगतिः ॥ ८१ ॥

दृष्टं यत् पक्कणे राज्ञा तत्र शाम्बरिकेहया ।
तत्र योल्लसिताऽविद्या सैवान्येद्युरिति ध्रुवम् ॥ ८२ ॥

तत्काले लवणेनाशु दृष्टो यः स्वप्नविभ्रमः ।
स एव संविदं प्राप्तः तदा पुक्कसचेतसि ॥ ८३ ॥

सत्ता सर्वपदार्थानां नान्या संवेदनादृते ।
संकल्पसंक्षयात् राम चिन्मात्रं अवशिष्यते ॥ ८४ ॥

इति श्रीवासिष्ठसंग्रहे लवणोपाख्यानं नाम
सप्तमः सर्गः ॥

---

॥ अष्टमः सर्गः ॥

## ॥ भार्गवोपाख्यानम् ॥

### 1. भार्गवमनोराज्यम् ।

वसिष्ठ उवाच —

एकं ब्रह्म चिदाकाशं सर्वात्मकं अखण्डितम् ।
स्थिता ब्रह्मणि विश्वश्रीः प्रतिभामात्ररूपिणी ॥ १ ॥

अत्र भार्गववृत्तान्तं कथयामि तवानघ ।
सानौ मन्दरशैलस्य भृगुः पूर्वमतप्यत ॥ २ ॥

निर्विकल्पसमाधिस्थे तस्मिन् शुक्रः तदात्मजः ।
ददर्शाप्सरसं तत्र गच्छन्तीं नभसः पथा ॥ ३ ॥

अथ तां मनसा ध्यायन् तत्रैवामीलितेक्षणः ।
आरब्धवान् मनोराज्यं तया सह यथासुखम् ॥ ४ ॥

स्वर्गे विहर्तुमारेभे ततः संकल्पमात्रतः ।
पुण्यक्षयानुसंधानात् पपातावनिमण्डले ॥ ५ ॥

ततः तस्य क्रमात् जीवः शालितामगमत् तदा ।
शालीन् भुक्तवतः पुत्रो भूत्वाऽसौ तपसि स्थितः ॥ ६ ॥

अवसत् मेरुगहने मन्वन्तरमयं ततः ।
धर्मचिन्तापरिभ्रंशात् जातो मद्रमहीपतिः ॥ ७ ॥

एवं अन्यानि जन्मानि समुपेत्य बहून्यथ ।
समङ्गायाः तटे जातः तपस्वी तापसात्मजः ॥ ८ ॥

अथ कालेन महता भृगुशुक्रसमुद्भवः ।
कायस्तत्र पपातोर्व्यां पवनातपजर्जरः ॥ ९ ॥

अथ वर्षसहस्रेण समाधेः विरतो भृगुः ।
पुत्रं मत्वा मृतं कोपात् कालं शप्तुं इयेष सः ॥ १० ॥

आधिभौतिकदेहोऽथ कालो भृगुमुपाययौ ।
उपेत्य कुपितं कालो मुनिं प्रोवाच सान्त्वयन् ॥ ११ ॥

"त्वं अनन्ततपा विप्रो वयं नियतिपालकाः ।
किं मूर्ख इव सर्वज्ञ मुधा मां शप्तुमिच्छसि ॥ १२ ॥

मनो हि तव पुलस्य समाधौ त्वयि संस्थिते ।
संत्यज्येदं वपुर्गत्वा विश्वाचीं बुभुजे दिवि ॥ १३ ॥

महीपो धीवरो वंशः ततः सर्पोऽथ कुक्कुटः ।
एवं पुत्रो विचित्रासु वासनावशतः स्वतः ॥ १४ ॥

स योनिषु चरित्वाद्य जातो विप्रकुमारकः ।
तपश्चरति ते पुत्रः समङ्गासरितस्तटे ॥ १५ ॥

तं इच्छसि यदि द्रष्टुं ज्ञाननेत्रेण लोकय ।
एवमुक्तो मुहूर्तेन प्रतिभानवशादसौ ॥ १६ ॥

समङ्गायाः तटे पुत्रं आलोक्य पुनराययौ ।



ततः कालो भृगुश्चैव समङ्गायाः तटं गतौ ॥ १७ ॥

शान्तेन्द्रियं समाधिस्थं तं दृष्ट्वा बुध्यतां अयम् ।
इति कालस्य संकल्पात् समाधेः विरराम सः ॥ १८ ॥

उन्मील्य नेत्रे तौ दृष्ट्वा शान्तं वच उवाच सः ।
भवतो दर्शनेनाहं परां निर्वृतिमागतः ॥ १९ ॥

इति प्रोच्य नमस्यन्तं प्रोवाच भृगुरात्मजम् ।
स्मरात्मानं प्रबुद्धोऽसि ततः सोऽपि प्रबोधितः ॥ २० ॥

मुहूर्तमात्रात् सस्मार जन्मान्तरदशां निजाम् ।
उत्तिष्ठ तात गच्छामः पश्यामः पूर्वकं वपुः ॥ २१ ॥

इति तस्य वचः श्रुत्वा प्रापुस्ते मन्दरं क्षणात् ।
दृष्ट्वा तु भार्गवस्तत्र शुष्कां तनुं उवाच सः ॥ २२ ॥

निरस्तकल्पनाजालं इयं शेते सुखं वने ।
अचित्तत्वं विना नान्यत् श्रेयः पश्यामि जन्तुषु ॥ २३ ॥

अथाक्षिप्य वचस्तस्य कालः प्रोवाच भार्गवम् ।
प्रविशेमां तनुं साधो कर्तव्यं अनया त्वया ॥ २४ ॥

गुरुत्वं असुरेन्द्राणां कल्याणं अस्तु वां इति ।
उक्त्वा चान्तर्हिते तस्मिन् संत्यज्य द्विजभावनाम् ॥

शुक्रदेहं विवेशाथ भार्गवो नियतेः वशः ॥
चकाराप्यायनं तस्य प्रोक्षणैः स भृगुस्तदा ॥ २६ ॥

अथ शुक्रः समुत्थाय ववन्दे पितरं सुखी ।
भार्गवाख्यानमेतत् त्वं विचारय यथामति ॥ २७ ॥

3 मनोमलक्षालनम् ।

जन्तोः कृतविचारस्य विगलद्वृत्तिचेतसः ।
विज्ञानवशतो नूनं स्वभावः संप्रसीदति ॥ २८ ॥

विचारेण परिज्ञातस्वभावस्योदितात्मनः ।
अनुकम्प्या भवन्तीह ब्रह्मविष्ण्विन्द्रशंकराः ॥ २९ ॥

कोऽहं कथमिदं चेति यावत् नान्तर्विचारितम् ।
संसाराडम्बरं तावत् अन्धकारोपमं स्थितम् ॥ ३० ॥

सर्वशक्तिः अनन्तात्मा सर्वभावान्तरस्थितः ।
अद्वितीयः चिदित्यन्तः यः पश्यति स पश्यति ॥ ३१ ॥

परिज्ञायोपभुक्तो हि भोगो भवति तुष्टये ।
विज्ञाय सेवितः चोरो मैत्रीमेति न चोरताम् ॥ ३२ ॥

मनसो निगृहीतस्य लीलाभोगोऽल्पकोऽपि यः ।
तमेवालब्धविस्तारं क्लिष्टत्वात् बहु मन्यते ॥ ३३ ॥

बद्धमुक्तो महीपालो ग्राममात्रेण तुष्यति ।
परैः अबद्धोऽनाक्रान्तो न राज्यं बहु मन्यते ॥ ३४ ॥

मनसो विजयात् नान्या गतिरस्ति भवार्णवे ।
तावत् निशीथवेताला वल्गन्ति हृदि वासनाः ॥ ३५ ॥

एकतत्त्वदृढाभ्यासात् यावत् न विजितं मनः ।
भृत्योऽभिमतकारित्वात् मन्त्री सत्कार्यकारणात् ॥ ३६ ॥

सामन्तश्चेन्द्रियक्रान्त्या गुरुः विद्याप्रदानतः ।
लालनात् स्निग्धललना पालनात् पावनः पिता ॥ ३७ ॥

सुहृत् उक्तं च विश्वासात् मनो मन्ये मनीषिणाम् ।
एवं मनोमणिं राम बहुपङ्ककलङ्कितम् ॥ ३८ ॥

विवेकवारिणा सिद्ध्यै प्रक्षाल्यालोकवान् भव ।
इन्द्रियारीन् अलं तीर्त्वा बुद्ध्या सत्यमवेक्ष्य च ॥ ३९ ॥

तत्रैव निष्ठितो भूत्वा तीर्णो भव भवार्णवात् ।
एवं ते कथितं राम मनोनैर्मल्यसाधनम् ॥ ४० ॥

इति श्रीवासिष्ठसंग्रहे भार्गवोपाख्यानं नाम
अष्टम सर्गः ॥

---

॥ नवमः सर्गः ॥

## ॥ दामाद्युपाख्यानम् ॥

### 1 अहंकारोदयः ।

वसिष्ठ उवाच —

दामव्यालकटन्यायं वक्ष्याम्यत्र शुभप्रदम् ।
शम्बरस्य बले सुप्ते तस्मिन् देशान्तरं गते ॥ १ ॥

तत्सैन्यं तरसा जघ्नुः छिद्रं प्राप्य किलामराः ।
स्वयं कोपादथायासीत् शम्बरः सुरपत्तनम् ॥ २ ॥

तस्य मायाबलात् भीताः सुरास्तेऽन्तर्धिमाययुः ।
शून्यं दृष्ट्वा तु स स्वर्गं विहृत्य कुपितस्तदा ॥ ३ ॥

लोकपालपुरीं दग्ध्वा जगामात्मीयमालयम् ।
अदृश्या एव देवास्ते जघ्नुः तस्य बलाधिपान् ॥ ४ ॥

शम्बरेण तदा भीताः निर्मिताः मायया त्रयः ।
दामो व्यालः कटश्चेति महामायाः महाबलाः ॥ ५ ॥

वासनात्माभिमानाभ्यां हीनास्ते न विदुः भयम् ।
केवलं सैनिकानग्रे दृष्ट्वा ते हननोद्यताः ॥ ६ ॥

हन्यमानाः तथा देवाः यत्र क्वापि च संस्थिताः ।
विषण्णाः क्षणमाश्वास्य ब्रह्माणं शरणं ययुः ॥ ७ ॥

ब्रह्मोवाच —

योधयन्तः पलायध्वं युध्यध्वं पुनरेव च ।
युद्धाभ्यासवशात् एषां असुराणां हृदाशये ॥ ८ ॥

अहंकारचमत्कारः नूनं उत्पद्यते तदा ।
गृहीतवासना एवं सुजेया वो भवन्ति ते ॥ ९ ॥

वासनातन्तुबद्धोऽयं लोको हि परिवर्तते ।
धीरोऽप्यतिबहुज्ञोऽपि प्रबुद्धोऽपि महानपि ॥ १० ॥

तृष्णया बध्यते जन्तुः सिंहः शृङ्खलया यथा ।
इत्याकर्ण्य च युध्यन्तः पुनः चक्रुः पलायनम् ॥ ११ ॥

एवं पुनः पुनः वृत्ते दृढाभ्यासात् अहंकृतेः ।
दामादयोऽहमित्यास्थां जगृहुः क्षुब्धचेतसः ॥ १२ ॥

आस्थावासनया ग्रस्ताः ततः कृपणतां गताः ।
एवं बद्धधियां तेषां धैर्यमन्तर्धिमाययौ ॥ १३ ॥

अथ प्रम्लानसत्त्वास्ते मरणात् भीतचेतसः ।
नैव शक्ताः सुरान् हन्तुं पातालं विविशुर्भयात् ॥ १४ ॥

अविवेकानुसन्धानात् चित्तं आपदमीदृशीम् ।
अवाप्नोतीति बोधाय तवेयं कीर्तिता कथा ॥ १५ ॥

2 अहङ्कारः त्रिविधः ।

इदं मे स्यात् इदं मे स्यात् इति बुद्धेः कदाचन ।
स्वेन दौर्भाग्यदैन्येन न भस्माप्युपतिष्ठति ॥ १६ ॥

वेत्ति नित्यं उदारात्मा त्रैलोक्यमपि यस्तृणम् ।
तं त्यजन्त्यापदः सर्वाः सर्पा इव जरत्त्वचम् ॥ १७ ॥

आपदः संपदः सर्वाः सर्वत्रानादरो जयः ।
अहंभावोऽङ्कुरो जन्मवृक्षाणां अक्षयात्मनाम् ॥ १८ ॥

ममेदमिति विस्तीर्णाः तेषां शाखाः सहस्रशः ।
त्रिविधो राघवास्तीह सोऽहङ्कारो जगत्त्रये ॥ १९ ॥

अहं सर्वं इदं विश्वं परमात्माऽहमच्युतः ।
नान्यत् अस्तीति यो भावः परमा सा ह्यहंकृतिः ॥ २० ॥

सर्वस्मात् व्यतिरिक्तोऽहं वालाग्रशतकल्पितः ।
इति या संविदेवासौ द्वितीयाऽहंकृतिः शुभा ॥ २१ ॥

पाणिपादादिमात्रोऽयं अहं इत्येष निश्चयः ।
अहङ्कारः तृतीयोऽसौ लौकिकः तुच्छ एव सः ॥ २२ ॥

अथसौ द्वावहङ्कारौ अङ्गीकृत्यातिलौकिकौ ।
तृतीयाऽहंकृतिः त्याज्या लौकिकी दुःखदायिनी ॥२३॥

पूर्वोक्ते चापि संत्यज्य सर्वाहंकृतिवर्जितः ।
यस्तिष्ठति स एवोच्चैः पदमारोहति ध्रुवम् ॥ २४ ॥

अत्यन्तं परमं श्रेयः एतदेव परं पदम् ।

3 निर्वासनता ।

अथ ते शृणु वक्ष्यामि शम्बरेण कृतं ततः ॥ २५ ॥

दामादयोऽप्यहंकारात् निर्जिता समरे सुरैः ।
इति संचिन्त्य शास्त्रज्ञान् मिथ्याभावविवर्जितान् ॥२६॥

सविवेकान् अहंकारविहीनान् माययाऽसृजत् ।
सर्वज्ञाः वेद्यवेत्तारः जरामरणनिर्भयाः ॥ २७ ॥

भीमो भासो दृढश्चेति नामभाजो हि तेऽभवन् ।
वीतरागैः गतद्वेषैः सततं समदृष्टिभिः ॥ २८ ॥

प्राप्तार्थकारिभिः क्षीणैः वर्तमानानुवर्तिभिः ।
देवसेना हता भूयः जगाम शरणं हरिम् ॥ २९ ॥

चक्रेणाथ हतास्तेन सङ्गरे भृशदारुणे ।
निर्वासना महात्मानः परां शान्तिमुपागताः ॥ ३० ॥

तस्मात् वासनया बद्धं मुक्तं निर्वासनं मनः ।
सम्यगालोकनात् सत्यात् वासना प्रविलीयते ॥ ३१ ॥

वासनाविलये चेतः शाम्यत्यस्नेहदीपवत् ।
अस्य संसारदुःखस्य सर्वोपद्रवकारिणः ॥ ३२ ॥

उपाय एक एवास्ति मनसः स्वस्य निग्रहः ।
भोगेच्छामात्रको बन्धः तत्त्यागो मोक्ष उच्यते ॥ ३३ ॥

मनसोऽभ्युदयो नाशः मनोनाशो महोदयः ।

4 जीवाविर्भावः ।

यथा सर्वगतः सौक्ष्म्यात् आकाशो नोपलक्ष्यते ॥ ३४ ॥

तथा निरंशः चिद्भावः सर्वगोऽपि न लक्ष्यते ।
सैषा चित् अविनाश्यात्मा स्वात्मेत्यादिकृताभिधा ॥

नास्तमेति न चोदेति नोत्तिष्ठति न तिष्ठति ।
न च याति न चायाति न चेह न च नेह चित् ॥ ३६ ॥

राघवेयं प्रपञ्चेन जगन्नाम्ना विजृम्भते ।
येन शब्दं रसं रूपं गन्धं जानासि राघव ॥ ३७ ॥

सोऽयमात्मा परं ब्रह्म सर्वमापूर्य संस्थितः ।
द्वितीया कल्पनैवेह न रघूद्वह विद्यते ॥ ३८ ॥

ब्रह्ममात्रात् ऋते वह्नौ औष्ण्यमात्रात् ऋते यथा ।
आदौ शमदमप्रायैः गुणैः शिष्यं प्रबोधयेत् ॥ ३९ ॥

पश्चात् सर्वमिदं ब्रह्म शुद्धस्त्वं इति बोधयेत् ।
अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत् ॥ ४० ॥

महानरकजालेषु स तेन विनियोजितः ।
अविद्ययैवोत्तमया स्वात्मनाशोद्यमोत्थया ॥ ४१ ॥

विद्या सा प्राप्यते यद्वत् मलेन क्षाल्यते मलम् ।
कुतोऽविद्या च जातेति राम माऽस्तु विचारणा ॥ ४२ ॥

इमां कथं अहं हन्मीत्येषा तेऽस्तु विचारणा ।
अस्तं गतायां क्षीणायां अस्यां ज्ञास्यसि राघव ॥ ४३ ॥

यत एषा यया चैषा यथा नष्टेत्यखण्डितम् ।
किञ्चित् क्षुभितरूपा सा चिच्छक्तिः चिन्महार्णवे ॥

विकल्पकलिताकारं देशकालक्रियास्पदम् ।
चितो रूपं महाबाहो क्षेत्रज्ञ इति कथ्यते ॥ ४५ ॥

वासनाः कलयन् सोऽपि यात्यहङ्कारतां पुनः ।
अहङ्कारो विनिर्णेता कलङ्की बुद्धिरुच्यते ॥ ४६ ॥

बुद्धिः सङ्कल्पकलिता प्रयाति मननास्पदम् ।
मनो घनविकल्पं तु गच्छतीन्द्रियतां शनैः ॥ ४७ ॥

पाणिपादादिमद् देहं इन्द्रियाणि विदुः बुधाः ।
एवं जीवो हि संकल्पवासनारज्जुवेष्टितः ॥ ४८ ॥

दुःखजालपरीतात्मा क्रमात् आयाति चित्तताम् ।
इति शक्तिमयं चेतो घनाहंकारतां गतम् ॥ ४९ ॥

कोशकारकृमिः यद्वत् स्वेच्छया याति बन्धनम् ।
एवं जीवाः चितो भावाः भवभावनयेहिताः ॥ ५० ॥

ब्रह्मणः कल्पिताकाराः देवतिर्यङ्नरादयः ।
अविभिन्ना इव दृश्यन्ते बुद्बुदा वारिधेरिव ॥ ५१ ॥

इति श्रीवासिष्ठसंग्रहे दामाद्युपाख्यानं नाम
नवमः सर्गः ॥

॥ दशमः सर्गः ॥

## ॥ दाशूरोपाख्यानम् ॥

1 सृष्टिक्रमः ।

वसिष्ठ उवाच —

ब्राह्मं शृणु महाबाहो शरीरग्रहणक्रमम् ।
दिक्कालाद्यनवच्छिन्नं आत्मतत्त्वं स्वशक्तितः ॥ १ ॥

लीलयैव यदाऽऽदत्ते दिक्कालकलितं वपुः ।
तदैव जीवपर्यायं वासनावशतः परम् ॥ २ ॥

मनः संपद्यते लोलं कलनाकलनोन्मुखम् ।
कलयन्ती मनःशक्तिः आदौ भावयति क्षणात् ॥ ३ ॥

आकाशभावनां अच्छां शब्दबीजरसोन्मुखीम् ।
ततः तत् घनतां यातं घनस्पन्दक्रमात् मनः ॥ ४ ॥

भावयत्यनिलस्पन्दं स्पर्शबीजरसोन्मुखम् ।
ताभ्यां आकाशवाताभ्यां दृढाभ्यासात् पुनस्ततः ॥ ५ ॥

शब्दस्पर्शस्वरूपाभ्यां संघर्षात् जायतेऽनलः ।
मनः तादृग्गुणाविष्टं रसतन्मात्रवेदनम् ॥ ६ ॥

क्षणात् चेतत्यपां शैत्यं जलसंवित् ततो भवेत् ।
ततः तादृग्गुणाविष्टं मनो भावयति क्षणात् ॥ ७ ॥

गन्धतन्मात्रमेतस्मात् भूमिसंवित् ततो भवेत् ।
अथेत्थं भूततन्मात्रैः वेष्टितं तनुतां त्यजत् ॥ ८ ॥

वपुः वन्हिकणाकारं स्फुरितं व्योम्नि पश्यति ।
तस्मिन् तत्तीव्रसंवेगात् भावयत् भासुरं वपुः ॥ ९ ॥

स्थूलतां एति पाकेन मनो विल्वफलं यथा ।
मूषास्थद्रुतहेमाभं स्फुरितं विमलाम्बरे ॥ १० ॥

संनिवेशं अथादत्ते तत् तेजः स्वस्वभावतः ।
कालेन स्फुटतां एत्य भवत्यमलविग्रहः ॥ ११ ॥

बुद्धिसत्त्वबलोत्साहविज्ञानैश्वर्यसंस्थितः ।
स एव भगवान् ब्रह्मा सर्वलोकपितामहः ॥ १२ ॥

संस्मृत्य सर्ववृन्दानि समतीतान्यनेकशः ।
लीलया कल्पयत्येषः चित्राः संकल्पजाः प्रजाः ॥ १३ ॥

तासां स्वर्गापवर्गार्थं धर्मकामार्थसिद्धये ।
अनन्तानि विचित्राणि शास्त्राणि समकल्पयत् ॥ १४ ॥

सृष्टिरेवं इयं राम सर्गेऽस्मिन् स्थितिमागता ।
संकल्पजं जगत् पश्य सुदीर्घस्वप्नमुत्थितम् ॥ १५ ॥

संकल्पस्योपशान्तौ तत् शाम्यत्यस्नेहदीपवत् ।
अतो राघव तत्त्वज्ञो व्यवहारेषु संस्थितः ॥ १६ ॥

नष्टं नष्टं उपेक्षेत प्राप्तं प्राप्तं उपाहरेत् ।
अनागतानां भोगानां अवाञ्छनं अकृत्रिमम् ॥ १७ ॥

आगतानां च संभोगः इति पण्डितलक्षणम् ।
यस्य नेच्छा न वाऽनिच्छा ज्ञस्य कर्मणि तिष्ठतः ॥ १८ ॥

न तस्य लिप्यते प्रज्ञा पद्मपत्रमिवाम्बुभिः ।

2　दाशूरतपः ।

वसिष्ठ उवाच —

बहुप्रकारा सा सृष्टिः नास्यां तु नियमः क्वचित् ॥ १९ ॥

जगन्मायास्वरूपस्य वर्णनाव्यपदेशतः ।
दाशूराख्यायिकां राम वर्ण्यमानां मया शृणु ॥ २० ॥

दाशूराख्यो मुनेः पुत्रः मगधेषु वने वसन् ।
मातापितृवियोगेन शोकमग्नो रुरोद ह ॥ २१ ॥

तं तदाऽऽश्वासयामासाशरीरा वनदेवता ।
ऋषिपुत्र महाप्राज्ञ किमज्ञ इव रोदिषि ॥ २२ ॥

सर्वदैवेदृशी साधो संसारस्य स्थितिः चला ।
जायते जीव्यते पश्चात् अवश्यं च विनश्यति ॥ २३ ॥

एवं आश्वासितो धैर्यं आलम्ब्य कृतवान् असौ ।
पाश्चात्यं पैतृकं कर्म, ततो ब्राह्मेण कर्मणा ॥ २४ ॥

तपसा श्रोत्रियो भूत्वा दृष्ट्वाऽशुद्धं धरातलम् ।
उग्रेण तपसा वह्निं आराद्‌धुं शुद्धमण्डलम् ॥ २५ ॥

यतो नाप्नोमि वृक्षाणां उपरिस्थितिरस्तु मे ।
इति संप्रार्थ्य संप्राप्ते नीपवृक्षे लतागृहे ॥ २६ ॥

दृढं पद्मासनं बद्‌ध्वा दिग्भ्यः प्रत्याहृतात्मना ।
अज्ञातपरमार्थेन दशवर्षाणि तत्र च ॥ २७ ॥

गवाश्वनरमेधाद्यैः मनसैवायजत् सुरान् ।
कालेनामलतां याते वितते तस्य चेतसि ॥ २८ ॥

बलात् अवततारान्तः ज्ञानं आत्मप्रसादजम् ।

3 पुत्रप्रबोधनम् ।

वनदेवी ततः तं च सुतं कान्तमयाचत ॥ २९ ॥

दाशूरो दयया तस्यै पुष्पं दत्वा व्यसर्जयत् ।
अथ दीर्घेण कालेन तत्र सा वनदेवता ॥ ३० ॥

द्वादशाब्दमुपादाय सुतं मुनिमुपाययौ ।
कृतो मयैष सर्वासां कलानामपि कोविदः ॥ ३१ ॥

ज्ञानं त्वस्य भवानेव कृपयोपदिशत्विति ।
तथा प्रोक्तः तदा पुत्रं बहुधैवं अबोधयत् ॥ ३२ ॥

दाशूर उवाच —

स्वोत्थनामा नृपः कश्चित् विख्यातो भुवनत्रये ।
यस्यानुशासनं सर्वे शिरोभिः धारयन्ति च ॥ ३३ ॥

त्रयस्तस्य महाबाहोः देहाः विहरणक्षमाः ।
जगत् आक्रम्य तिष्ठन्ति ह्युत्तमाधममध्यमाः ॥ ३४ ॥

व्योमन्येव हि जातोऽसौ तत्रैव च स्थितिं गतः ।
चतुर्दशमहारथ्यं नगरं तेन निर्मितम् ॥ ३५ ॥

वापीसप्तकभूषाढ्यं दीपद्वयविराजितम् ।
नानाऽपवरकाः सृष्टाः नवद्वारविभूषिताः ॥ ३६ ॥

तेष्वन्तः विविधां क्रीडां करोत्येष महीपतिः ।
निर्मायान्यत् पुरं गत्वा तत उत्थाय धावति ॥ ३७ ॥

स्वेनैव व्यवहृत्यासौ कदाचित् परिभूयते ।
मुदमेति कदाचिच्च दुःखितोऽस्मीति शोचति ॥ ३८ ॥

2 संकल्पप्रभावः ।

पुत्र उवाच —

क एष भवता प्रोक्तः स्वोत्थनामा महीपतिः ।

दाशूर उवाच —

इदं संसारसंस्थानं एवं ते कथितं मया ॥ ३९ ॥

परमात् नभसो जातः संकल्पः स्वोत्थ उच्यते ।
जायते स्वयमेवासौ स्वयमेव विलीयते ॥ ४० ॥

शून्ये व्योमनि तेनेदं निर्मितं त्रिजगत्पुरम् ।
चतुर्दशात्र लोका हि दीपौ चन्द्रदिवाकरौ ॥ ४१ ॥

क्रीडार्थं आत्मनः चित्ताः देहापवरकाः कृताः ।
स्वयैव चेष्टया दुःखी सुखी चैव स्वचेष्टया ॥ ४२ ॥

तमः सत्त्वं रजश्चेति तस्य देहाः त्रयः स्मृताः ।
तमोरूपो हि संकल्पो नित्यप्राकृतचेष्टया ॥ ४३ ॥

परां कृपणतां एत्य प्रयाति कृमिकीटताम् ।
सत्त्वरूपो हि संकल्पो धर्मज्ञानपरायणः ॥ ४४ ॥

अदूरकेवलीभावं स्वाराज्यमधितिष्ठति ।
रजोरूपो हि संकल्पो लोकसंव्यवहारवान् ॥ ४५ ॥

परितिष्ठति संसारे पुत्रदारानुरञ्जितः ।
त्रिविधं तु परित्यज्य संकल्पः परमश्नुते ॥ ४६ ॥

संकल्पस्य लयः कार्यः नियम्य मनसा मनः ।
यदि वर्षसहस्राणि तपश्चरति दारुणम् ॥ ४७ ॥

नान्यः कश्चिदुपायोऽस्ति संकल्पोपशमात् ऋते ।
निःसंकल्पो यथाप्राप्तव्यवहारपरो भव ॥ ४८ ॥

चिदचेत्योन्मुखत्वं हि याति संकल्पसंक्षये ।
विकल्पजालमुत्सृज्य प्राप्यते सुखमद्वयम् ॥ ४९ ॥

पुत्र उवाच—

कीदृशस्तात संकल्पः कथं उत्पद्यते च सः ।
कथं च वृद्धिमायाति कथं चैष विनश्यति ॥ ५० ॥

दाशूर उवाच—

अनन्तस्यात्मतत्त्वस्य सत्तासामान्यरूपिणः ।
चितः चेत्योन्मुखत्वं यत् तत् संकल्पाङ्कुरं विदुः ॥५१॥

भावयन्ती चितिः चेत्यं व्यतिरिक्तमिवात्मनः ।
संकल्पतामुपायाति वीजं अंकुरतां इव ॥ ५२ ॥

संकल्पेन हि संकल्पः स्वयमेव प्रजायते ।
वर्धते स्वयमेवाशु दुःखाय न सुखाय तु ॥ ५३ ॥

भावनाभावमात्रेण संकल्पः क्षीयते स्वयम् ।
तण्डुलस्य यथा चर्म नश्यति क्रियया सुत ॥ ५४ ॥

जीवस्य सहजोऽप्येषः नश्यत्येव न संशयः ।

वसिष्ठ उवाच—

दाशूराख्यायिकैषा ते कथिता चिन्त्यतां त्वया ॥ ५५ ॥

5　वासनात्यागः ।

कर्तृताऽकर्तृता चोभे विद्येते परमात्मनि ।
सर्वस्थोऽहं अकर्तेति दृढभावनयाऽनघ ॥ ५६ ॥

प्रवाहपतितं कर्म कुर्वन्नपि न लिप्यते ।
अथ सर्वं करोमीति महाकर्तृतया तया ॥ ५७ ॥

यदीच्छसि स्थितिं राम तत् तामप्युत्तमां विदुः ।
अथवा सर्वकर्तृत्वं अकर्तृत्वं च राघव ॥ ५८ ॥

सर्वं त्यक्त्वा मनः पीत्वा सत्तामात्रः स्थिरो भव ।
संत्याज्या सा प्रयत्नेन देहोऽहमिति या स्थितिः ॥५९॥

बन्धो हि वासनाबन्धो मोक्षः स्यात् वासनाक्षयः ।
वासनां तां परित्यज्य मोक्षार्थित्वमपि त्यज ॥ ६० ॥

तामसीः वासनाः पूर्वं त्यक्त्वा विषयवासिताः ।
मैत्र्यादिभावनानाम्नीः गृहाणामलवासनाः ॥ ६१ ॥

ता अप्यन्तः परित्यज्य ताभिः व्यवहरन्नपि ।
अन्तः शान्तसमस्तेहो भव चिन्मात्रवासनः ॥ ६२ ॥

तामप्यथ परित्यज्य मनोबुद्धिसमन्विताम् ।
शेषे स्थिरसमाधानो येन त्यजसि तत्त्यज ॥ ६३ ॥

समाधिं अथ कर्माणि मा करोतु करोतु वा ।
हृदयेनास्तसर्वास्थो मुक्त एवोत्तमाशयः ॥ ६४ ॥

नैष्कर्म्येण न तस्यार्थो न तस्यार्थोऽस्ति कर्मभिः ।
संत्यक्तवासनात् मौनात् ऋते नास्त्युत्तमं पदम् ॥

न केचन जगद्भावाः तत्त्वज्ञं रञ्जयन्त्यमी ।
बार्हस्पत्यः कचः पूर्वं समाधेः उत्थितो जगौ ॥ ६६ ॥

"किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।
आत्मना पूरितं विश्वं महाकल्पाम्बुना यथा ॥ ६७ ॥

न तदस्ति न यत्राहं न तदस्ति न यत् मयि ।
किं अन्यत् अभिवाञ्छामि सर्वं संविन्मयं स्थितम्" ॥

ये हि राघव सत्त्वस्थाः रमन्ते शिष्टवर्त्मनि ।
समाः समरसाः सौम्याः सततं साधुवृत्तयः ॥ ६९ ॥

तेषां पदं महाबाहोऽनुगन्तव्यं हि सर्वदा ।
कोऽहं कथं इदं चेति प्रयत्नेन विचार्यताम् ॥ ७० ॥

तामसीं राजसीं चैव जातिमन्यामपि श्रिताः ।
स्वविवेकवशात् यान्ति सन्तः सात्त्विकजातिताम् ॥७१॥

इति श्रीवासिष्ठसंग्रहे दाशूरोपाख्यानं नाम
दशमः सर्गः ॥

---

## ॥ एकादशः सर्गः ॥

# ॥ जनकोपाख्यानम् ॥

### 1 सिद्धगीताश्रवणम् ।

वसिष्ठ उवाच —

समस्तं खल्विदं ब्रह्म सर्वं आत्मेदमाततम् ।
अहं अन्यदिदं चान्यत् इति भ्रान्तिं त्यजानघ ॥ १ ॥

तते ब्रह्मघने नित्ये संभवन्ति न कल्पनाः ।
यथाप्राप्तानुभवनात् सर्वत्रानभिवाञ्छनात् ॥ २ ॥

त्यागादानपरित्यागात् विज्वरो भव राघव ।
यस्येदं जन्म पाश्चात्यं विद्या हि विमला तथा ॥ ३ ॥

आर्यता हृद्यता मैत्री सौम्यता मुक्तता ज्ञता ।
समाश्रयन्ति तं नित्यं सर्वे वाञ्छन्ति तं जनाः ॥ ४ ॥

एष तावत् क्रमः प्रोक्तः सामान्यः सर्वदेहिनाम् ।
एष एव गुरुप्रोक्तात् अनुष्ठानात् शनैः शनैः ॥ ५ ॥

जन्मना जन्मभिः वाऽपि सिद्धिदः समुदाहृतः ।
द्वितीयः स्वात्मनैवाशु किंचिद्व्युत्पन्नचेतसाम् ॥ ६ ॥

भवति ज्ञानसंप्राप्तिः आकाशफलपातवत् ।
अत्रेदं शृणु वृत्तान्तं जनकस्य महीपतेः ॥ ७ ॥

एकदोपवने रम्ये एकान्ते विचचार सः ।
तत्र शुश्राव संछन्नैः सिद्धैः गीताः महात्मभिः ॥ ८ ॥

"द्रष्टृदर्शनदृश्यानि त्यक्त्वा वासनया सह ।
प्रकाशनं प्रकाश्यानां आत्मानं समुपास्महे ॥ ९ ॥

सर्वेष्ववस्थितं हंसं उच्चरन्तं उपास्महे ।
संत्यज्य हृद्गुहेशानं देवं अन्यं प्रयान्ति ये ॥ १० ॥

ते रत्नं अभिवाञ्छन्ति त्यक्त्वा हस्तस्थकौस्तुभम् ।
सर्वाशाः किल संत्यज्य फलं एतत् अवाप्यते ॥ ११ ॥

बुद्ध्वाऽप्यत्यन्तवैरस्यं यः पदार्थेषु दुर्मतिः ।
बध्नाति भावनां भूयो नरो नासौ स गर्दभः ॥ १२ ॥

उत्थितान् उत्थितान् एतान् इन्द्रियारीन् तथा पुनः ।
अङ्गैः अङ्गान् समाक्रम्य हन्यात् सम्यक् पुनः पुनः ॥

प्रशान्तमनसः स्वस्मिन् भवत्येव सुखे स्थितिः ।"
इति सिद्धगणैः गीता गीताः श्रुत्वा महीपतिः ॥ १४ ॥

विषादं आजगामासौ आकुलो विललाप च ।

2 जनकस्य प्रबोधः ।

"अपर्यन्तस्य कालस्य कोऽप्यंशो जीव्यते मया ॥

तस्मिन् भावं निबध्नामि धिङ्मां अधमचेतनम् ।
कियन्मात्रं इदं नाम राज्यं आजीवितं मम ॥ १६ ॥

कोटयो ब्रह्मणां याताः गताः स्वर्गपरम्पराः ।
प्रयाताः पांसुवत् भूपाः का धृतिः मम जीविते ॥ १७ ॥

अज्ञानैकहतो बाल्ये यौवने मदनाहतः ।
शेषे कलत्रचिन्तार्तः किं करोतु कदा जडः ॥ १८ ॥

सतोऽसत्ता स्थिता मूर्ध्नि मूर्ध्नि रम्येऽप्यरम्यता ।
सुखेषु मूर्ध्नि दुःखानि किं एकं संश्रयाम्यहम् ॥ १९ ॥

येषां निमेषणोन्मेषौ जगतां प्रलयोदयौ ।
तादृशाः पुरुषाः यान्ति मादृशां गणनैव का ॥ २० ॥

संसार एव दुःखानां सीमान्तः किल कथ्यते ।
तन्मध्यपतिते देहे सुखं आस्वाद्यते कथम् ॥ २१ ॥

संसारं शोषयिष्यामि संकल्पोपशमेन तु ।
प्रबुद्धोऽस्मि प्रहृष्टोऽस्मि दृष्टः चोरो मयाऽऽत्मनः ॥

मनो नामेह हन्म्येनं मनसाऽस्मि चिरं हतः ।
विबुधैः साधुभिः सिद्धैः अहं साधु प्रबोधितः ॥ २३ ॥

आत्मानं अनुगच्छामि परमानन्दसाधनम् ।"
इति मत्वा चिरं तूष्णीं स्थित्वोत्थाय पुनर्जगौ ॥ २४ ॥

"किमुपादेयमस्तीह यत्नात् संसाधयामि किम् ।
किं मे क्रियापरतया किं मे निष्क्रिययापि वा" ॥ २५ ॥

इति संचिन्त्य जनको यथाप्राप्तां क्रियां ततः ।
असक्तः कर्तुमुत्तस्थौ दिनं दिनपतिः यथा ॥ २६ ॥

भविष्यत् नानुसंधत्ते नातीतं चिन्तयत्यसौ ।
वर्तमाननिमेषं तु हसन्नेवानुवर्तते ॥ २७ ॥

स्वविचारवशात् तेन प्राप्तं प्राप्यं अशेषतः ।
सीमानं सर्वदुःखानां आपदां कोशमुत्तमम् ॥ २८ ॥

बीजं संसारवृक्षाणां प्रज्ञामान्द्यं विनाशयेत् ।
तस्मात् प्रयत्नः कर्तव्यः सम्यक् प्रज्ञाविवृद्धये ॥ २९ ॥

चिन्तामणिः इयं प्रज्ञा हृत्कोशस्था विवेकिनः ।
फलं कल्पलतेवैषा चिन्तितं संप्रयच्छति ॥ ३० ॥

नित्यं अन्तर्विचारस्य पश्यतः चञ्चलं जगत् ।
जनकस्येव कालेन स्वयं आत्मा प्रसीदति ॥ ३१ ॥

3 वासनात्यागो द्विविधः ।

न दैवं न च कर्माणि न धनानि न बान्धवाः ।
शरणं भवभीतानां स्वप्रयत्नात् ऋते नृणाम् ॥ ३२ ॥

उपादेयानुपतनं हेयैकान्तविवर्जनम् ।
यत् एतत् मनसो राम तं बन्धं विद्धि नेतरत् ॥ ३३ ॥

हेयादेयदृशौ त्यक्त्वा शेषस्थः सुस्थिरो भव ।
संविद्वीर्यवशात् प्राप्तं दृश्यं आश्रयते मनः ॥ ३४ ॥

यदाऽऽश्रयसि दृश्यं त्वं तदा सचित्तोऽसि बन्धवान् ।
यदा दृश्यं संत्यजसि तदाऽचित्तोऽसि मोक्षवान् ॥ ३५॥

अहंभावमयीं छित्त्वा भव संसारपारगः ।

श्रीराम उवाच —

अतिगम्भीरमेवैतत् भगवन् वचनं तव ॥ ३६ ॥

यदि त्यजाम्यहङ्कारं देहो नूनं विनश्यति ।

वसिष्ठ उवाच —

द्विविधो वासनात्यागो ध्येयो ज्ञेयश्च नामतः ॥ ३७ ॥

अहं एषां पदार्थानां एते च मम जीवितम् ।
नाहं एतैः विना कश्चित् न मयैते विना किल ॥ ३८॥

इत्यन्तर्निश्चयं कृत्वा विचार्य मनसा दृढम् ।
मत्वा नाहं पदार्थस्य न पदार्थो ममेत्यपि ॥ ३९ ॥

अन्तः शीतलया बुद्ध्या कुर्वतो लीलया क्रियाः ।
यो नूनं वासनात्यागो ध्येयो राम स कीर्तितः ॥ ४० ॥

सर्वं समतया बुद्ध्वा यं कृत्वा वासनाक्षयम् ।
जहाति निर्ममो देहं ज्ञेयोऽसौ वासनाक्षयः ॥ ४१ ॥

द्वावेतौ राघव त्यागौ समौ मुक्तपदे स्थितौ ।
द्वावेतौ ब्रह्मतां यातौ द्वावेतौ विगतज्वरौ ॥ ४२ ॥

ईप्सितानीप्सिते न स्तो यस्यान्तः सर्ववस्तुषु ।
सुप्तवत् चेष्टते यश्च स मुक्त इति कथ्यते ॥ ४३ ॥

हर्षामर्षभयक्रोधकामकार्पण्यदृष्टिभिः ।
न परामृश्यते योऽन्तः स जीवन्मुक्त उच्यते ॥ ४४ ॥

4 निश्चयः चतुर्विधः ।

चतुर्धा निश्चयः प्रोक्तः पुरुषस्य विचारिणः ।
आपादमस्तकं चाहं मातापितृविनिर्मितः ॥ ४५ ॥

इत्येको निश्चयो राम बन्धायासद्विलोकनात् ।
अतीतः सर्वभावेभ्यो वालाग्रादप्यहं तनुः ॥ ४६ ॥

इति द्वितीयो मोक्षाय निश्चयो जायते सताम् ।
जगज्जालपदार्थात्मा सर्वमेवाहमक्षयः ॥ ४७ ॥

तृतीयो निश्चयोऽप्येवं मोक्षायैव रघूत्तम ।
अहं चेदं जगत्सर्वं शून्यव्योमसमं सदा ॥ ४८ ॥

एवमेव चतुर्थोऽपि निश्चयो मोक्षसिद्धये ।
एतेषां प्रथमः प्रोक्तः तृष्णया बन्धकृत् सदा ॥ ४९ ॥

शुद्धतृष्णाः त्रयस्त्वन्ये जीवन्मुक्तविलासिनः ।
पूर्णां दृष्टिं अवष्टभ्य ध्येयत्यागविलासिनीम् ॥ ५० ॥

जीवन्मुक्ततया स्वस्थो लोके विहर राघव ।
नाभिनन्दति न द्वेष्टि न शोचति न काङ्क्षति ॥ ५१ ॥

ईहितानीहितैः मुक्तः संसारे नावसीदति ।
अन्तः संत्यक्तसर्वाशो वीतरागो विवासनः ॥ ५२ ॥

बहिः सर्वसमाचारो लोके विहर राघव ।
अयं बन्धुः अयं नेति गणना लघुचेतसाम् ॥ ५३ ॥

उदारचरितानां तु त्रिलोकी बन्धुतां व्रजेत् ।

5 पुण्यपावनसंवादः ।

अत्रैवोदाहरन्तीमं संवादं मुनिपुत्रयोः ॥ ५४ ॥

आसीत् दीर्घतपा नाम महेन्द्रे ज्ञानवान् मुनिः ।
पुत्रौ बभूवतुस्तस्य पुण्यपावननामकौ ॥ ५५ ॥

मातापित्रोर्वियोगेऽसौ और्ध्वदैहिककर्मणि ।
पुण्य एव स्थितो व्यग्रः पावनो दुःखमाययौ ॥ ५६ ॥

पावनोऽर्धप्रबुद्धोऽभूत् ज्ञानवान् पुण्य एव हि ।
पावनं शोकसंतप्तं पुण्यो वचनमब्रवीत् ॥ ५७ ॥

"त्वामेव परमां आत्मपदवीं मोक्षनामिकाम् ।
स्वभावरूपामापन्नें किं पितर्यनुशोचसि ॥ ५८ ॥

मातापितृसहस्राणि समतीतानि ते पुरा ।
पुत्रबान्धववृन्दानि जन्तोः जन्मनि जन्मनि ॥ ५९ ॥

शोचनीया यदि स्नेहात् मातापितृसुतादयः ।
तर्ह्यतीताः न शोच्यन्ते कथमेते सहस्रशः ॥ ६० ॥

सिंहवानरमातङ्गखरकाकादियोनिषु ।
पावन त्वं हि जातोऽसि पुरा शतसहस्रशः ॥ ६१ ॥

तत्रत्या बान्धवो याताः तान् कथं नानुशोचसि ।
भावाभावविनिर्मुक्तं जरामरणवर्जितम् ॥ ६२ ॥

संस्मरात्मानमव्यग्रं मा त्वं मूढमतिर्भव ।"
एवं प्रबोधितः तेन तथा पुण्येन पावनः ॥ ६३ ॥

उभावपि ततो जातौ ज्ञानविज्ञानपारगौ ।
एवमेव त्वया भाव्यं चिन्तारहितचेतसा ॥ ६४ ॥

इति श्रीवसिष्ठसंग्रहे जनकोपाख्यानं नाम
एकादशः सर्गः ॥

---

॥ द्वादशः सर्गः ॥

## ॥ बल्युपाख्यानम् ॥

### 1 बलेः निर्वेदः ।

वसिष्ठ उवाच —

चिन्तनेनैधते चिन्ता त्विन्धनेनेव पावकः ।
नश्यत्यचिन्तनेनैव विनेन्धनमिवानलः ॥ १ ॥

विनिवारितसर्वार्थात् अपहस्तितबान्धवात् ।
न स्वधैर्यात् ऋते किंचित् अभ्युद्धरति संकटात् ॥ २ ॥

वैराग्येण च शास्त्रेण महत्त्वादिगुणैरपि ।
यत्नेनापद्विघातार्थं स्वयमेवोन्नमेत् मनः ॥ ३ ॥

पूर्णे मनसि संपूर्णं जगत् सर्वं सुधाद्रवैः ।
उपानद्गूढपादस्य ननु चर्मास्तृतैव भूः ॥ ४ ॥

वैराग्यात् पूर्णतां एति मनो नाशावशानुगम् ।
न तथा भाति पूर्णेन्दुः न पूर्णः क्षीरसागरः ॥ ५ ॥

न लक्ष्मीवदनं कान्तं स्पृहाहीनं यथा मनः ।
अथवा बलिवत् बुद्धिभेदेन ज्ञानमाप्यताम् ॥ ६ ॥

पाताले दानवो राजा विरोचनसुतो बलिः ।
दशकोटीस्तु वर्षाणां दैत्यराज्यं चकार ह ॥ ७ ॥

अजस्रमतिभुक्तेषु त्रैलोक्योदारवृत्तिषु ।
अरुचिं प्राप्य भोगेषु चिन्तयामास चैकदा ॥ ८ ॥

"किं वा भवति भुक्तेन किं नामेदं सुखावहम् ।
पुनरालिङ्ग्यते कान्ता पुनरेव च भुज्यते ॥ ९ ॥

पुनः पुनः इदं कुर्वन् प्राज्ञः कस्मात् न लज्जते ।
कृतयाऽप्यनया नित्यं क्रियया कृतकार्यया ॥ १० ॥

कोऽर्थः स्यात् तादृशो येन पुनः कर्म न विद्यते ।

2 पित्रा उपदेशः ।

आः स्मृतं यत् पुरा पृष्टो मया तातो विरोचनः ॥ ११ ॥

'पितः सकलदुःखानां सुखानां चापि सर्वशः ।
यत्र सर्वे भ्रमाः शान्ताः कोऽसौ सीमान्त उच्यताम् ॥'

इत्युक्तो भगवान् प्राह 'सीमान्तोऽस्ति हि तादृशः ।
यत्र पृथ्वी न नाकाशं सागरा न न चाद्रयः ॥ १३ ॥

न वनानि न तीर्थानि न नद्यो न सरांसि च ।
सुमहान् एक एवास्ति तत्र राजा महाद्युतिः ॥ १४ ॥

सर्वकृत् सर्वगः सर्वः स च तूष्णीं व्यवस्थितः ।
तेन संकल्पितो मन्त्री सर्वतो मन्त्रणोन्मुखः ॥ १५ ॥

अघटं घटयत्याशु घटं विघटयत्यपि ।
भोक्तुं किंचिन्न शक्नोति न च जानाति किंचन ॥

राजार्थं केवलं सर्वं करोत्यज्ञोऽपि सन् सदा ।
राजा केवलमेकान्ते स्वस्थ एवावतिष्ठति ॥ १७ ॥

स तत्र बलवान् मन्त्री देवासुरगणैः सुत ।
न लक्षगुणितैर्वाऽपि सर्वैः आक्रम्यते मनाक् ॥ १८ ॥

प्रभुणैव तु जय्योऽयं युक्त्याऽऽयाति स वश्यताम् ।
देशनाम्ना मयोक्तस्ते मोक्षः सकलदुःखहा ॥ १९ ॥

राजा च भगवान् आत्मा मन्त्री प्राज्ञो मनो भवेत् ।
विषयान् प्रत्यनास्था स्याद् युक्तिर्हि मनसो जये ॥

चित्तस्य भागौ द्वौ भोगैः शास्त्रेणैकं प्रपूरयेत् ।
गुरुशुश्रूषया चैकं अव्युत्पन्नस्य सत्क्रमे ॥ २१ ॥

किंचित् व्युत्पत्तियुक्तस्य भागं भोगैः प्रपूरयेत् ।
गुरुशुश्रूषया भागौ भागं शास्त्रार्थचिन्तया ॥ २२ ॥

व्युत्पत्तिं अनुयातस्य द्वौ भागावपि चेतसः ।
पूरयेत् शास्त्रवैराग्यैः द्वौ ध्यानगुरुपूजया ॥ २३ ॥

प्रज्ञया च विचारेण समं आत्मावलोकनम् ।
तृष्णासंत्यागमेवापि सदा तीव्रं समाहरेत्' ॥ २४ ॥

इति मे कथितं पूर्वं दिष्ट्याऽद्य संस्मृतं मया ।
दिष्ट्या बोधोऽपि मे जातः जाता भोगेषु चारतिः ॥

दिष्ट्या शमसुखं स्वच्छं विशाम्यमृतशीतलम् ।"

3 शुक्रेण उपदेशः ।

"कोऽहं तावत् अयं किं स्यात् आत्मेत्यात्मावलोकिनम् ।
पृच्छामि भार्गवं शुक्रं" इति ध्यानात् तमागतम् ।
भार्गवं पूजयामास पादाभिवन्दनादिना ॥ २७ ॥

ततः तत्र समासीनं गुरुं पप्रच्छ दैत्यराट् ।
"गुरो कोऽहं किमेते वा लोका इति वद प्रभो" ॥

शुक्र उवाच —

बहुनाऽत्र किमुक्तेन सारं संक्षेपतः शृणु ।
चित् त्वं चिदहमेते च लोकाः चिदिति संग्रहः ॥ २९ ॥

इति निश्चयमादाय विलोकय धियेद्धया ।
स्वयमेवात्मनाऽऽत्मानं अनन्तपदमाप्स्यसि ॥ ३० ॥

एवमुक्त्वा गते शुक्रे सर्वं चिन्मात्रमेव हि ।
इति भावनया ध्यायन् प्रशान्तकलनागणः ॥ ३१ ॥

ध्यातृध्येयध्यानहीनो निर्मनाः शान्तवासनः ।
बभूवावातदीपाभो बलिः प्राप्तमहापदः ॥ ३२ ॥

निर्विकल्पसमाधाने चिरं स्थित्वा समुत्थितः ।
राजकार्याणि सर्वाणि संव्यधात् स यथाक्रमम् ॥ ३३ ॥

आपदं संपदं चैव समदृष्ट्यैव पश्यति ।
नास्तमेति न चोदेति तत्प्रज्ञा सुखदुःखयोः ॥ ३४ ॥

येषु येषु प्रदेशेषु मनो मज्जति बालवत् ।
तेभ्यः तेभ्यः समुद्धृत्य तद्धि तत्त्वे नियोजयेत् ॥ ३५ ॥

एवं अभ्यस्यताऽभ्यासं मनोमत्तमतङ्गजम् ।
निबध्य सर्वभावेन परं श्रेयोऽधिगम्यते ॥ ३६ ॥

इति श्रीवासिष्ठसंग्रहे बल्युपाख्यानं नाम
द्वादशः सर्गः ॥

## ॥ त्रयोदशः सर्गः ॥

## ॥ प्रह्लादोपाख्यानम् ॥

### 1 हरितोषणम्।

वसिष्ठ उवाच —

अथेमं परमं राम विज्ञानाधिगमे क्रमम्।
शृणु दैत्येश्वरः सिद्धः प्रह्लादः स्वात्मना यथा ॥ १ ॥

प्रह्लादोऽचिन्तयद् दृष्ट्वा दानवान् हरिणा हतान्।
"हरेः आक्रमणे नूनं हरिरेव हि साधनम् ॥ २ ॥

तमेव शरणं यायां" इति निश्चित्य माधवम्।
मनसा पूजयामास संभारभरभारिणा ॥ ३ ॥

रत्नौघपात्रपटलैः चन्दनादिविलेपनैः।
धूपैः दीपैः पवित्रैश्च नानाविभवभूषणैः ॥ ४ ॥

अथ तस्मिन् पुरे दैत्याः ततः प्रभृति वैष्णवाः।
सर्वे एवाभवन् भक्त्या राजा ह्याचारकारणम् ॥ ५ ॥

श्रुत्वैतत् विस्मिता देवाः पप्रच्छुः भोगिशायिनम्।
'किमेतत् भगवन् दैत्याः विरुद्धाः त्वां उपासते ॥ ६ ॥

वराको दानवो हीनजातिः भक्तिः क्व वैष्णवी'।

श्रीभगवानुवाच —

'विबुधाः मा विषण्णाः स्त प्रह्लादो भक्तिमान् इति ॥

पाश्चात्यं जन्म तस्येदं मोक्षार्होऽसौ अरिंदमः ।
गुणवान् निर्गुणो जातः इत्यनर्थक्रमं विदुः ॥ ८ ॥

निर्गुणो गुणवान् जातः इत्याहुः सिद्धिदं क्रमम्' ।
प्रह्लादं प्रति गीर्वाणाः ततः स्निग्धत्वं आययुः ॥ ९ ॥

मनसा कर्मणा वाचा प्रह्लादो भक्तिमानपि ।
त्यक्तभोगादिकलनः विश्रान्ति अनुपागतः ॥ १० ॥

तां स्थितिं तु हरिः ज्ञात्वा तस्य पूजागृहं ययौ ।
विज्ञाय पूजया देवं संपूज्य द्विगुणेद्धया ॥ ११ ॥

प्रह्लादः परमप्रीतो गिरा तुष्टाव पुष्टया ।
श्रीभगवानुवाच —
वरं गृहाण ते भूयोजन्मदुःखोपशान्तये ॥ १२ ॥
प्रह्लाद उवाच —
यद् उदारतमं वेत्सि तदेवादिश मे विभो ।
श्रीभगवानुवाच —
सर्वसंभ्रमसंशान्त्यै परमाय फलाय च ॥ १३ ॥

ब्रह्मविश्रान्तिपर्यन्तो विचारोऽस्तु तवानघ ।

2 आत्मविचारणम् ।

इत्युक्त्वाऽन्तर्हिते देवे समाप्यार्चां यथाक्रमम् ॥ १४ ॥

उपविश्याथ दैत्येन्द्रोऽकरोदात्मविचारणम् ।
'जगत् तावत् इदं नाहं बाह्यं तत् जडमेव हि ॥ १५ ॥

नाहं देहो जडो नाश्यः पवनेनैव विस्फुरन् ।
जडया कर्णशष्कुल्या कल्प्यमानः क्षणक्षयी ॥ १६ ॥

शून्याकृतिः शून्यभवः शब्दो नाहं अचेतनः ।
त्वचा क्षणविनाशिन्या प्राप्योऽप्राप्योऽयमन्यथा ॥

चित्प्रसादोपलब्धात्मा स्पर्शो नाहं अचेतनः ।
दृश्यदर्शनयोः लीनं क्षयि क्षणविनाशिनोः ॥ १८ ॥

केवले द्रष्टरि क्षीणं रूपं नाहं अचेतनम् ।
लब्धात्मा जिह्वया तुच्छो लोलक्षणिकसत्तया ॥ १९ ॥

स्वल्पस्पन्दो द्रव्यनिष्ठो रसो नाहं अचेतनः ।
नासयाऽप्यन्धजडया क्षयिणा परिकल्पितः ॥ २० ॥

पेलवोऽनियताकारो गन्धो नाहं अचेतनः ।
निर्ममोऽमननः शान्तो गतपञ्चेन्द्रियभ्रमः ॥ २१ ॥

शुद्धचेतन एवाहं कलाकलनवर्जितः ।
चेत्यवर्जितचिन्मात्रं अहमेषोऽवभासकः ॥ २२ ॥

सबाह्याभ्यन्तरव्यापी निष्कलामलसन्मयः ।
आः इदानीं स्मृतं सत्यं एतत् तत् अखिलं मया ॥

निर्विकल्पचिदाभासः एष आत्माऽस्मि सर्वगः ।
मयैव चेतनेनेमे सर्वे घटपटादयः ॥ २४ ॥

सूर्यान्ता अवभासन्ते दीपेनोत्तमतेजसा ।
मय्येवैताः स्फुरन्तीह विचित्रेन्द्रियवृत्तयः ॥ २५ ॥

तेजसाऽन्तः प्रकाशेन यथाऽग्निकणपङ्क्तयः ।
सर्वभावान्तरस्थाय चेत्यमुक्तचिदात्मने ॥ २६ ॥

प्रत्यक्चेतनरूपाय मह्यमेव नमो नमः ।
स्वयमेवोदितं स्वस्थं नमामि स्ववशं स्वयम् ॥ २७ ॥

तिष्ठन्नपि हि नासीनो गच्छन्नपि न गच्छति ।
शान्तोऽपि व्यवहारस्थः कुर्वन्नपि न लिप्यते ॥ २८ ॥

एष एव सदाऽन्वेष्यः स्तुत्यो ध्यातव्य एव च ।
जरामरणसंमोहात् अनेनोत्तीर्य गम्यते ॥ २९ ॥

न मे भोगस्थितौ वाञ्छा न मे भोगविवर्जने ।
यत् आयाति तत् आयातु यत् प्रयाति प्रयातु तत् ॥

मनसा मनसि च्छिन्ने निरहङ्कारतां गते ।
भावेन गलिते भावे स्वस्थः तिष्ठामि केवलः ॥ ३१ ॥

जय सर्वागमातीत जय सर्वागमास्पद ।
जय भाव जयाभाव जय शान्तिपरायण ' ॥ ३२ ॥

इति मत्वा समाधौ सः निर्विकल्पे चिरं स्थितः ।

3　हरिणा प्रबोधनम् ।

एवं तस्मिंस्तु विश्रान्ते हरिः एवं व्यचिन्तयत् ॥ ३३ ॥

"दैत्यराजे शमं याते शत्रुहीनाः सुराः ध्रुवम् ।
शममेत्य गमिष्यन्ति मोक्षाख्यं पदमुत्तमम् ॥ ३४ ॥

देवाभावेऽफलाः स्युर्हि भुवि यज्ञतपःक्रियाः ।
क्रियास्वथोपशान्तासु भूलोकोऽप्यस्तमेष्यति ॥ ३५ ॥

असंसारप्रसङ्गोऽथ तस्य नाशे भविष्यति ।
नेह श्रेयोऽनुपश्यामि जगत्येवं शमं गते" ॥ ३६ ॥

इति संचिन्त्य दैत्येन्द्रं पाञ्चजन्यरवेण सः ।
प्रबोध्य तमुवाचेदं 'साधो स्मर निजाकृतिम् ॥ ३७ ॥

जीवन्मुक्तेन भवता राज्य एव हि तिष्ठता ।
क्षेपणीया गतोद्वेगं आकल्पान्तं इयं तनुः ॥ ३८ ॥

कृशोऽतिदुःखी मूढोऽहं इति चान्याश्च भावनाः ।
भर्ति यस्यावलुम्पन्ति मरणं तस्य राजते ॥ ३९ ॥

यस्य नाहंकृतो भावः बुद्धिः यस्य न लिप्यते ।
यः समः सर्वभूतेषु जीवितं तस्य शोभते ॥ ४० ॥

आशापाशनिबद्धोऽन्तः इतश्चेतश्च नीयते ।
यो विलोलमनोवृत्त्या मरणं तस्य राजते ॥ ४१ ॥

योऽन्तःशीतलया बुद्ध्या रागद्वेषविमुक्तया ।
साक्षिवत् पश्यतीदं हि जीवितं तस्य शोभते ॥ ४२ ॥

तदुत्तिष्ठासुराधीश सिंहासनं उपाश्रय ।
यावत् मेरुः धरा यावत् यावत् चन्द्रार्कमण्डलम् ॥

अखण्डितगुणश्लाघी तावत् राजा भवानघ" ।
इत्युक्त्वा पुण्डरीकाक्षः तत्रैवान्तर्धिमाययौ ॥ ४४ ॥

श्रीराम उवाच —

कथं प्रबुद्धं भगवन् प्रह्लादस्य महात्मनः ।
परे पदे दृढं लीनं पाञ्चजन्यस्वनैः मनः ॥ ४५ ॥

वसिष्ठ उवाच —

भ्रष्टबीजोपमा भूयोजन्माङ्कुरविवर्जिता ।
हृदि जीवद्विमुक्तानां शुद्धा वसति वासना ॥ ४६ ॥

अपि वर्षसहस्रान्ते तयैवान्तरवस्थया ।
सति देहे प्रबुध्यन्ते कुतोऽप्युच्छूनया शनैः ॥ ४७ ॥

इति श्रीवासिष्ठसंग्रहे प्रह्लादोपाख्यानं नाम
त्रयोदशः सर्गः ॥

---

## ॥ चतुर्दशः सर्गः ॥

# ॥ गाध्युपाख्यानम् ॥

### 1 स्वस्यश्वपचत्वादिदर्शनम् ।

वसिष्ठ उवाच —

जगन्मायाप्रपञ्चस्य वैचित्र्यप्रतिपत्तये ।
इतिहासमिमं वक्ष्ये शृणुष्वावहितोऽनघ ॥ १ ॥

कोसलेषु द्विजः कश्चित् गुणी गाधिः इति श्रुतः ।
आकण्ठं अम्बुनिर्मग्नः तपश्चक्रे ततो हरिः ॥ २ ॥

आगत्योचे 'द्विजोत्तिष्ठ गृहाणाभिमतं वरम्'

गाधिरुवाच —

त्वया सृष्टां इमां मायां भगवन् पारमात्मिकीम् ॥ ३ ॥

द्रष्टुमिच्छामि संसारनाम्नीं आश्चर्यकारिणीम् ।
'इमां द्रक्ष्यसि मायां त्वं' इत्युक्त्वाऽन्तर्दधे हरिः ॥

स्नानार्थं एकदा गाधिः ममज्जान्तर्जलं तदा ।
अपश्यत् मृतमात्मानं स्वगृहे बन्धुभिः वृतम् ॥ ५ ॥

ततो नीत्वा श्मशानं ते चक्रुस्तं भस्मसात् शवम् ।
अथापश्यदसौ भूयो हूणग्रामनिवासिनाम् ॥ ६ ॥

श्वपचानां गृहे जातं आत्मानं कान्तया युतम् ।
ततो जरठतां यातं मृत्युना हृतबान्धवम् ॥ ७ ॥

ततः शोकपरीतात्मा निजं देशं विहाय सः ।
नगरं प्राप्य कीराणां राजमार्गे स्थितः तदा ॥ ८ ॥

मृते राजनि राजार्थं विहरन्तं इतस्ततः ।
हस्तिनं स ददर्शाथ करेणादाय तं गजः ॥ ९ ॥

स्कन्धे न्यवेशयत् मोदात् नेदुः दुन्दुभयस्तदा ।
एवं गवलनाम्नाऽसौ कीरराजो बभूव ह ॥ १० ॥

अष्टौ वर्षाणि राज्यं सः चकार मन्त्रिपूजितः ।
यदृच्छयैकदा तं तु निर्गतं त्यक्तभूषणम् ॥ ११ ॥

आलक्ष्य श्वपचः कश्चित् प्रोचे च 'चिरबान्धव ।
दर्शनेन तवाद्याहं परां निर्वृतिमागतः' ॥ १२ ॥

श्रुत्वेदं मन्त्रिणः सर्वे वातायनगताः स्त्रियः ।
श्वपचोऽयं महीपालः इति निश्चित्य दुःखिताः ॥ १३ ॥

ततः प्रभृति नास्प्राक्षुः तिष्ठन्तं तं शवं यथा ।
अथ सर्वे 'वयं दीर्घकालं श्वपचदूषिताः ॥ १४ ॥

प्रायश्चित्तैः न शुद्ध्यामः प्रविशामो हुताशनम्' ।
इति निर्णीय सर्वेऽग्निं विविशुः सह बन्धुभिः ॥ १५ ॥

राजा मत्वा 'मदर्थं हि देशेऽनर्थोऽयमागतः' ।
इति वन्हौ अनुद्वेगं आजुहाव निजं वपुः ॥ १६ ॥

अत्रान्तरेऽनलक्षुब्धो गाधिः मोहात् अबुध्यत ।
'कोऽहं किमिव पश्यामि किं अकार्षं अहं किल' ॥

एवं विचारयंश्चित्रं उदस्थात् उदकान्तरात् ।
2 मिथ्यादृष्टस्य सत्यता ।
चेतो भ्रमत्यनन्तासु भ्रान्तिदृष्टिषु देहिनाम् ॥ १८ ॥

इति मत्वा स्थिते तस्मिन् आजगाम प्रियोऽतिथिः ।
क्रमात् शयनमासाद्य गाधिः पप्रच्छ तं द्विजम् ॥ १९ ॥

'किं ब्रह्मन् संकृशाङ्गस्त्वं किमिति श्रमवानसि' ।
अतिथिरुवाच —
'कीरेषु न्यवसं मासं तत्रैषा हि कथा श्रुता ॥ २० ॥

इहाभूत् श्वपचो राजा वर्षाण्यष्टौ द्विजोत्तम ।
स एवान्ते परिज्ञातः प्रविष्टो ज्वलनं जवात् ॥ २१ ॥

तथा द्विजशतानीह प्रविष्टानि हुताशनम्' ।
इति श्रुत्वा ततो गत्वा प्रायश्चित्तं विधाय च ॥ २२ ॥

क्रमात् चान्द्रायणस्यान्ते पारणार्थं इहागतः ।
श्रान्तोऽहं उपवासेन नान्यदस्ति हि कारणम्' ॥ २३ ॥

इति तेनोदितं श्रुत्वा विस्मयाविष्टमानसः ।
गाधिश्च चिन्तयामास मद्वृत्तान्तोऽयमीदृशः ॥ २४ ॥

अथ निर्गत्य स द्रष्टुं हूणमण्डलमागतः ।
तत्र दृष्ट्वा यथापूर्वं निजं श्वपचमन्दिरम् ॥ २५ ॥

कीरमण्डलमासाद्य स्वानुभूतानि दृष्टवान् ।
विस्मयोत्कम्पितशिराः धातुश्चेष्टां परामृशन् ॥ २६ ॥

भूयो गाधिः तपश्चक्रे तीव्रं शैलस्य कन्दरे ।
आगत्य च तपःप्रीतः ऊचे चक्रगदाधरः ॥ २७ ॥

'मम माया त्वया दृष्टा किमन्यत् अभिवाञ्छसि' ।

गाधिरुवाच —

तस्या मर्म न जानामि भ्रमः सत्योऽभवत् कथम् ॥२८॥

## 3 भगवदुपदेशः ।

श्रीभगवानुवाच —

चित्तस्थं हि पृथिव्यादि न बहिस्थं कदाचन ।
स्वप्नभ्रमपदार्थेषु सर्वैरेवानुभूयते ॥ २९ ॥

यत्रानन्तजगज्जालं संस्थितं तेन चेतसा ।
दर्शितं श्वपचत्वं चेत् तदाऽत्र विस्मयः कुतः ॥ ३० ॥

यथा श्वपचता दृष्टा प्रतिभासवशात् त्वया ।
तथैवातिथिमायातं दृष्टवानसि संभ्रमे ॥ ३१ ॥

तथा ह्यूणस्थलं प्राप्य दृष्टोऽसि प्राक्तनं गृहम् ।
तथा कीरेषु राजत्वं दृष्टवान् प्रतिबिम्बितम् ॥ ३२ ॥

कदाचित् प्रतिभैकैव बहूनामपि जायते ।
तेनैव संनिवेशेन श्वपचोऽप्यभवत् पुरा ॥ ३३ ॥

स कीरनृपतिः भूत्वा प्रविवेशानलं ततः ।
तत्राभूत् केवलं चित्ते स्वसंबन्धितया हि तत् ॥ ३४ ॥

ज्ञानस्यापरिपूर्णत्वात् न शक्नोषि मनोभ्रमम् ।
विनिवारयितुं तेन तेनैवाक्रम्यसे क्षणात् ॥ ३५ ॥

तपः कुरु त्वमुत्थाय ततो ज्ञानमवाप्स्यसि" ।
इत्युक्तः त्यक्तसंकल्पः गाधिः तताकरोत् तपः ॥ ३६ ॥

आत्मचिन्तनरूपं च मनोभ्रमनिवृत्तये ।
दशवर्षाणि तेनासौ आत्मज्ञानं अवाप्तवान् ॥ ३७ ॥

जीवन्मुक्तपदं प्राप्य वीतशोको बभूव च ।
एवं एषाऽतिवितता दुर्ज्ञाना रघुनन्दन ॥ ३८ ॥

परमात्माश्रया माया महामोहकरी सदा ।
चित्ताक्रमणमात्रात्तु परमात् औषधात् ऋते ॥ ३९ ॥

प्रयत्नेनापि संसारमहारोगो न शाम्यति ।
वर्तमानं क्रमायातं भजत् बाह्यधिया क्षणम् ॥ ४० ॥

अभजत् भावि भूतं च याति चित्तं अचित्तताम् ।
चेतनं चित्तरिक्तं हि प्रत्यक्चेतनमुच्यते ॥ ४१ ॥

निर्मनस्कस्वभावात्तु न तत्र कलनामलः ।
मलं संवेद्यमुत्सृज्य मनो निर्मलयन् परम् ॥ ४२ ॥

आशापाशान् अलं छित्वा संविन्मात्रपरो भव ।
तदेव क्षीयते मोहः संसारभ्रमकारणम् ॥ ४३ ॥

अनात्मन्यात्मभावेन ममेदमिति भावतः ।
अहंकारविकारेण चेतो गच्छति पीनताम् ॥ ४४ ॥

हेयादेयविभागेन समाश्वासेन संसृतौ ।
स्नेहेन धनलोभेन चेतो गच्छति पीनताम् ॥ ४५ ॥

उद्दालकवदालूनं विशीर्णं भूतपञ्चकम् ।
कृत्वा कृत्वा धिया धीर धीरयाऽन्तः विचारय ॥ ४६ ॥

इति श्रीवासिष्ठसंग्रहे गाध्युपाख्यानं नाम
चतुर्दशः सर्गः ॥

---

## ॥ पञ्चदशः सर्गः ॥

# ॥ उद्दालकोपाख्यानम् ॥

### १ विश्रान्त्यपेक्षा ।

श्रीराम उवाच —

उद्दालकेन भगवन् कथमन्तर्विचारितम् ।

वसिष्ठ उवाच —

उद्दालको मुनिः कश्चित् अल्पप्रज्ञो विचारवान् ॥ १ ॥

ततः क्रमेण तपसा शास्त्रार्थैः नियमैः यमैः ।
विवेकवान् बभूवाथ चिन्तयामास धीरधीः ॥ २ ॥

"किं तत् प्राप्यं प्रधानं स्यात् यद्विश्रान्तौ न शोच्यते ।
कदाऽहं मननातीते पदे परमपावने ॥ ३ ॥

चिरं विश्रान्तिमेष्यामि निर्विकल्पसमाधिना" ।
इति चिन्तापरवशो ध्यानाभ्यासं चकार सः ॥ ४ ॥

विषयैः नीयमाने तु चित्ते मर्कटचञ्चले ।
न स लेभे समाधानप्रतिष्ठां प्रीतिदायिनीम् ॥ ५ ॥

कदाचित् उदितार्काभं तेजः पश्यति विस्तृतम् ।
कदाचित् केवलं व्योम कदाचित् निबिडं तमः ॥ ६ ॥

एवं पर्याकुलमनाः स लुठन् ध्यानवृत्तिषु ।
एकदा गिरिकान्तारे चोपविश्यासने क्वचित् ॥ ७ ॥

निश्चलः सुदृढं बध्वा पद्मासनं उदङ्मुखः ।
निर्विकल्पसमाध्यर्थं चकारेमां विचारणाम् ॥ ८ ॥

2 अन्तर्विचारणा ।

अपि मूर्ख मनः कोऽर्थः तव संसारवृत्तिभिः ।
यदि यासि महीरन्ध्रं ब्रह्मलोकं अथापि वा ॥ ९ ॥

तन्न निर्वाणमायासि विनोपशमनामृतम् ।
श्रोत्रतां मूर्ख संप्राप्य निष्फलोद्यमवर्धिताम् ॥ १० ॥

धिया शब्दानुसारिण्या मृगवत् मा क्षयं व्रज ।
त्वक्त्वं आगत्य दुःखाय स्पर्शोन्मुखतया धिया ॥ ११ ॥

मूर्ख मा बद्धतां एहि गजीलुब्धगजेन्द्रवत् ।
चाक्षुषीं वृत्तिमाश्रित्य प्रभारूपचयोन्मुखीम् ॥ १२ ॥

मा गच्छ दग्धतां मूर्ख कान्तिलुब्धपतङ्गवत् ।
रसनाभावमागत्य दुरन्नास्वादकाङ्क्षया ॥ १३ ॥

मा नाशमेहि बडिशपिण्डीलम्पटमत्स्यवत् ।
घ्राणमार्गं उपाश्रित्य शरीराम्भोजकोटरे ॥ १४ ॥

गन्धोन्मुखतया बन्धं मा समाश्रय भृङ्गवत् ।
कुरङ्गालिपतङ्गेभमीनाः त्वेकैकशो हताः ॥ १५ ॥

सर्वैः एतैः अनर्थैश्च व्याप्तस्याज्ञ कुतः सुखम् ।
करोम्येष किमर्थं वा तवैतत् अनुशासनम् ॥ १६ ॥

विचारणवतः पुंसः चित्त त्वमपि नासि यत् ।
अनन्तस्यात्मतत्त्वस्य तन्वी मनसि संस्थितिः ॥ १७ ॥

न संभवति बिल्वान्तः वासितादन्तिनोर्यथा ।
पादाङ्गुष्ठात् शिरो यावत् कणशः प्रविचारितम् ॥ १८ ॥

न लब्धोऽसौ अहंनामा को वा स्यात् अहमित्ययम् ।
इदं मांसं इदं रक्तं इमान्यस्थीनि देहके ॥ १९ ॥

इमे ते श्वासमरुतः को वा स्यात् अहमित्ययम् ।
इदं घ्राणं इयं जिह्वा त्वक् इयं श्रवणे इमे ॥ २० ॥

इदं चक्षुः असौ स्पर्शः को वा स्यात् अहमित्ययम् ।
अहमेव हि सर्वत्र नाहं किंचित् अपीह वा ॥ २१ ॥

इत्येवं वास्तवी दृष्टिः नेतरो विद्यते क्रमः ।
चिरं अज्ञानधूर्तेन पोथितोऽस्मि ह्यहंतया ॥ २२ ॥

पुनः न संश्रयाम्येनं स्वरूपार्थापहारिणम् ।
वासनाहीनमप्येतत् चक्षुरादीन्द्रियैः स्वतः ॥ २३ ॥

प्रवर्तते बहिः स्वार्थे वासना नात्र कारणम् ।
तत् इन्द्रियाणि मूर्खाणि त्यक्त्वाऽन्तर्वासनां निजाम् ॥

संकल्पपादपं तृष्णालतं छित्वा मनोवनम् ।
विततां भूमिमासाद्य विहरामि यथासुखम् ॥ २५ ॥

3 सत्तासामान्यप्राप्तिः ।

मुनिरेवं विनिर्णीय ह्यर्धोन्मीलितलोचनः ।
ओमित्युच्चारयन् तस्थौ प्राणायामक्रमेण सः ॥ २६ ॥

देहस्थितिं दृढां कृत्वा निबद्ध्येन्द्रियपञ्चकम् ।
चिन्तया हृदयाम्भोजे चेतो भ्रमरचञ्चलम् ॥ २७ ॥

बलात् संरोधयामास सेतुः जलमिव द्रुतम् ।
सौम्यतां अनयत् मौनी प्राणापानजवं मुखे ॥ २८ ॥

इन्द्रियाणीन्द्रियार्थेभ्यः पृथक् चक्रे प्रयत्नतः ।
बाह्यान् स्पर्शान् अशेषेण जहौ दूरे स धीरधीः ॥ २९ ॥

बभार हृदयाकाशे मनः संयममागतम् ।
दुधावाथ विकल्पौघान् प्रतिभासं उपेयुषः ॥ ३० ॥

आगच्छतो यथाकामं प्रतिभासान् पुनः पुनः ।
अच्छिनत् मनसा शूरः खड्गेनेव रणे रिपून् ॥ ३१ ॥

विकल्पौघे तथा लूने दृष्ट्वाऽज्ञानं हृदन्तरे ।
तदप्युच्छेदयामास सम्यक् स्वान्तर्विवस्वता ॥ ३२ ॥

गते तमसि चाज्ञाने तेजःपुञ्जं ददर्श सः ।
तैजस्यपि ततो लूने निद्रां प्राप्य लुलाव ताम् ॥ ३३ ॥

निद्रायां च निरस्तायां शून्या संवित् समुद्ययौ ।
शून्यसंविदि नष्टायां मूढं तस्याभवत् मनः ॥ ३४ ॥

मनसो मोहमप्येषः संममार्ज महाशयः ।
ततः तेजस्तमोनिद्रामोहादिपरिवर्जिताम् ॥ ३५ ॥

कामप्यवस्थां आसाद्य विशश्राम मनः क्षणम् ।
विश्रम्याशु पपात स्वसंविदं विश्वरूपिणीम् ॥ ३६ ॥

चिरानुसंधानवशात् स्वादनाच्च स्वसंविदः ।
मनः चिन्मयतां आगात हेम नूपुरतामिव ॥ ३७ ॥

चित्तत्वं अथ संत्यज्य चित्तं चित्तत्वतां गतम् ।
चेत्यं संत्यज्य चित् शुद्धा चित्सामान्यं समाययौ ॥

त्यक्तवीच्यादिभेदोऽब्धिः वाःसामान्यं इवैकधीः ।
चिदाकाशं ततः शुद्धं सोऽभवत् बोधमागतः ॥ ३९ ॥

तत्र प्रापत् अथानन्दं दृश्यदर्शनवर्जितम् ।
सत्तासामान्यरूपात्मा बभूवानन्दसागरः ॥ ४० ॥

जीवन्मुक्तपदं तत्तु यत् स संप्राप्तवान्द्विजः ।
उद्दालकोऽत्र षण्मासान दूरोत्सारितसिद्धिभूः ॥ ४१ ॥

कदाचित् अह्ना मासेन कदाचित् वत्सरेण च ।
कदाचित वत्सरौघेण ध्यानाशक्तो व्यबुध्यत ॥ ४२ ॥

चित्तत्त्वैकघनाभ्यासात् महाचित्त्वं उपेत्य सः ।
चित्सामान्यचिराभ्यासात् सत्तासामान्यमाययौ ॥ ४३ ॥

## 4 परा विश्रान्तिः ।

श्रीराम उवाच —

सत्तासामान्यं इत्युक्तं कीदृशं केन वा भवेत् ।

वसिष्ठ उवाच —

यदा संक्षीयते चित्तं अभावात्यन्तभावनात् ॥ ४४ ॥

चित्सामान्यस्वरूपस्य सत्तासामान्यता तदा ।
यदा सर्वं इदं चेत्यं सबाह्याभ्यन्तरात्मकम् ॥ ४५ ॥

अपलाप्य वसेत् चेतः सत्तासामान्यता तदा ।
व्युत्थितस्य भवत्येषा समाधिस्थस्य चानघ ॥ ४६ ॥

एनां आलम्ब्य पदवीं समस्तभयनाशिनीम् ।
उद्दालकोऽवसत् लोके यावदिच्छं यथासुखम् ॥ ४७ ॥

अथ कालेन महता बुद्धिः तस्य बभूव ह ।
विदेहमुक्तः तिष्ठामि देहं त्यक्त्वेति निश्चला ॥ ४८ ॥

ततः पद्मासनासीनश्चार्धोन्मीलितलोचनः ।
संयम्य गुदसंरोधात् द्वाराणि नव चेतसः ॥ ४९ ॥

संरुद्धप्राणपवनः भावितस्वात्मचिद्घनः ।
अङ्गचित्संविदभ्यासात् चित्सामान्यं उपाददे ॥ ५० ॥

तदभ्यासात् अवापान्तः आनन्दस्पन्दमुत्तमम् ।
तदास्वादनतो लीनचित्सामान्यदशाक्रमम् ॥ ५१ ॥

विश्वंभरं अनन्तात्म सत्तासामान्यं आययौ ।
तस्थौ समशमाभोगः परां विश्रान्तिमागतः ॥ ५२ ॥

उपशान्तः शनैः एषः स्वपदे विमलात्मनि ॥ ।
सर्वोपाधिविनिर्मुक्तो ब्रह्मरूपो बभूव सः ॥ ५३ ॥

इति श्रीवासिष्ठसंग्रहे उद्दालकोपाख्यानं नाम
पञ्चदशः सर्गः ॥

---

॥ षोडशः सर्गः ॥

## ॥ सुरघूपाख्यानम् ॥

1 अन्तः शीतलता ।

श्रीराम उवाच —

कश्चिद्धि दृश्यते लोके क्रमात् जातसमाधिकः ।
प्रबुद्ध इव विश्रान्तो व्यवहारपरोऽपि सन् ॥ १ ॥

कश्चित् एकान्तमाश्रित्य समाधिनियमस्थितः ।
तयोस्तु कतरः श्रेयान् इति मे भगवन् वद ॥ २ ॥

वसिष्ठ उवाच —

इमं गुणसमाहारं अनात्मत्वेन पश्यतः ।
अन्तः शीतलता याऽसौ समाधिः इति कथ्यते ॥ ३ ॥

दृश्यैः मम न संबन्धः इति निश्चित्य शीतलः ।
व्यवहारस्थितः कश्चित् कश्चित् ध्यानव्यवस्थितः ॥ ४ ॥

द्वावेतौ सुखिनौ राम यद्यन्तः परिशीतलौ ।
द्वावेतौ सुसमौ नूनं असंदेहपदं गतौ ॥ ५ ॥

अकर्तृ कुर्वदप्येतत् चेतः प्रतनुवासनम् ।
दूरंगतमनाः जन्तुः कथासंश्रवणे यथा ॥ ६ ॥

अकुर्वदपि कर्तैव चेतः प्रघनवासनम् ।
निष्पन्दाङ्गमपि स्वप्ने श्वभ्रपातस्थिताविव ॥ ७ ॥

यस्त्वात्मरतिरेवान्तः कुर्वन् कर्मेन्द्रियैः क्रियाः ।
न वशो हर्षशोकाभ्यां स समाहित उच्यते ॥ ८ ॥

आत्मवत् सर्वभूतानि परद्रव्याणि लोष्टवत् ।
स्वभावादेव नो भीत्या यः पश्यति स पश्यति ॥ ९ ॥

### 2 माण्डव्योपदेशः ।

अत्रैवोदाहरन्तीमं वृत्तान्तं सुरघोः किल ।
सुरघुः नाम बलवान् किरातेशोऽभवत् पुरा ॥ १० ॥

स चक्रे राज्यकार्याणि निग्रहानुग्रहक्रमैः ।
तज्जाभ्यां सुखदुःखाभ्यां तस्य दोलायितं मनः ॥ ११ ॥

अथैकदा स पप्रच्छ माण्डव्यं मुनिमागतम् ।
संपूज्य विधिवत् भक्त्या "संदेहं छिन्धि मे प्रभो ॥१२॥

निग्रहानुग्रहैः जाताः मद्भृत्यत्रपुषि स्थिताः ।
कषन्ति मां अलं चिन्ताः समतोदेति मे कथम्" ॥

माण्डव्य उवाच —

स्वविचारणयैवाशु शाम्यत्यन्तर्मनोज्वरः ।
कोऽहं कथं इदं किं वा कथं मरणजन्मनी ॥ १४ ॥

विचार्यैवं परिज्ञातस्वभावस्य सतः तव ।
मनः स्वरूपमुत्सृज्य शमं एष्यति विज्वरम् ॥ १५ ॥

यावत् सर्वं न संत्यक्तं तावत् आत्मा न लभ्यते ।
आत्मावलोकनार्थं हि तस्मात् सर्वं परित्यजेत् ॥ १६ ॥

एवमुक्त्वा मुनौ याते राजा स्वयं अचिन्तयत् ।
"देहमात्रं अहं नास्मि हस्तपादाद्यचेतनम् ॥ १७ ॥

कर्मेन्द्रियाणि नैवाहं न च कर्मेन्द्रियाणि मे ।
जडान्यतत्स्वरूपाणि न च बुद्धीन्द्रियाण्यहम् ॥ १८ ॥

नाहं एवं शरीरादि शिष्टं आलोकयाम्यहम् ।
शेषो विकल्पहीनो हि विशुद्धा चित् अहं ततः ॥ १९ ॥

सर्वभावगता सूक्ष्मा भावाभावविवर्जिता ।
स एव भगवान् आत्मा तन्तुः मुक्तास्विव स्थितः" ॥
इति ज्ञात्वा किरातेशो लेभे पदं अनुत्तमम् ।
विवेकाध्यवसायेन ब्राह्मण्यं इव गाधिजः ॥ २१ ॥

3 परिघेण संवादः ।

बभूव पारसीकानां परिघो नाम पार्थिवः ।
स बभूव परं मित्रं सुरघोः अस्य भूपतेः ॥ २२ ॥

कदाचित् जातदुर्भिक्षं राज्यं त्यक्त्वा वनं गतः ।
भक्षयन् शुष्कपर्णानि पर्णादः परिघः स्मृतः ॥ २३ ॥

ततो वर्षसहस्रेण तपसा दारुणात्मना ।
अभ्यासवशतः प्रापत् ज्ञानं आत्मप्रसादजम् ॥ २४ ॥

एकदा परिघः प्राप सदनं सुरघोर्मुदा ।
ते तत्र प्राक्तने मिते अन्योन्यं इदमूचतुः ॥ २५ ॥

परिघ उवाच —

ज्ञानं एतत् मया प्राप्तं त्वया ज्ञानं यथा पुरा ।
कच्चित् करोषि समया सुप्रसन्नगभीरया ॥ २६ ॥

दृष्ट्या सुभगकार्याणि कर्माण्येव नराधिप ।
आपातरमणीये च कच्चित् भोगे न सज्जसि ॥ २७ ॥

कच्चिच्चोपशमं श्रेयः समाधिं अनुतिष्ठसि ।

सुरघुः उवाच —

नित्यप्रबुद्धचित्तत्वात् कुर्वन्तोऽपि जगत्क्रियाः ॥ २८ ॥

आत्मैकतत्त्वसन्निष्ठाः सदैव सुसमाधयः ।
तत्त्वावबोधो भगवन् सर्वाशातृणपावकः ॥ २९ ॥

प्रोक्तः समाधिशब्देन न च तूष्णीं अवस्थितिः ।
अक्षुब्धा निरहङ्कारा द्वन्द्वेष्वननुपातिनी ॥ ३० ॥

निश्चिन्ता विगताभीष्टा हेयोपादेयवर्जिता ।
प्रोक्ता समाधिशब्देन परिपूर्णा मनोगतिः ॥ ३१ ॥

परिघ उवाच —

राजन् नूनं प्रबुद्धोऽसि प्राप्तवानसि तत्पदम् ।
संशीतलान्तःकरणो गताहङ्कारविक्लवः ॥ ३२ ॥

सुरघुः परिघश्चैव विचार्यैवं जगद्भ्रमम् ।
मिथः प्रपूजितौ तुष्टौ स्वव्यापारपरौ गतौ ॥ ३३ ॥

4 स्वात्मसमुद्धरणम् ।

यो ह्यध्यात्ममयो नित्यं नित्यं अन्तर्मुखः सुखी ।
नित्यं चिदनुसंधानः स न शोकेन बाध्यते ॥ ३४ ॥

यस्मिन् देशे गिरौ तज्ज्ञो नास्ति सज्जनपादपः ।
सफलः शीतलच्छायो न तत्र निवसेत् बुधः ॥ ३५ ॥

न धनानि न मित्राणि न शास्त्राणि न बान्धवाः ।
नराणां उपकुर्वन्ति मग्नस्वात्मसमुद्धृतौ ॥ ३६ ॥

मनोमात्रेण मित्रेण सदैव सहवासिना ।
सह किंचित् परामृश्य भवत्यात्मा समुद्धृतः ॥ ३७ ॥

मनोहङ्कारनिलये सर्वभावान्तरस्थिता ।
समुदेति परानन्दा या तनुः पारमेश्वरी ॥ ३८ ॥

सा स्वयं योगसंसिद्धा परमा विगतोपमा ।
न गम्या वचसां राम हृद्येवेहानुभूयते ॥ ३९ ॥

इति श्रीवासिष्ठसंग्रहे सुरधूपाख्यानं नाम
षोडशः सर्गः ॥

---

॥ सप्तदशः सर्गः ॥

## ॥ मनोनाशप्रकारः ॥

1 भासविलाससंवादः ।

वसिष्ठ उवाच —

मनसैव मनः छित्त्वा यद्यात्मा नावलोक्यते ।
नास्तमेति जगद्दुःखं मनश्छेदे सुखात्मधीः ॥ १ ॥

सुहृदोरत्र संवादं शृणु भासविलासयोः ।
पुरा सह्यगिरेः सानौ तापसौ द्वौ बभूवतुः ॥ २ ॥

आस्तां अन्योन्यसुस्निग्धौ तयोरप्यात्मजावुभौ ।
विलासभासनामानौ समं आसीत् तयोः मनः ॥ ३ ॥

मृतौ तु पितरौ दृष्ट्वा चक्राते परिदेवनम् ।
ततस्तौ तपसा कालं क्षेपयामासतुः पृथक् ॥ ४ ॥

एकदा संगतौ तौ च ह्येवमन्योन्यमूचतुः ।

विलास उवाच —

वद क्व क्षपितः कालः कच्चित् ते सफलं तपः ॥ ५ ॥

कच्चित् ते विज्वरा बुद्धिः कच्चित् कुशलवान् असि ।

भास उवाच —

कुशलं तु कुतोऽस्माकं संसारे तिष्ठतां इह ॥ ६ ॥

यावत् नाधिगतं ज्ञेयं यावत् क्षीणा न चित्तभूः ।
यावत् तीर्णो न संसारः तावत् नः कुशलं कुतः ॥ ७ ॥

यावत् नाभ्युदितो बोधः तावत् नः कुशलं कुतः ।
एवं तौ कुशलप्रश्नं कृतवन्तौ परस्परम् ॥ ८ ॥

कालेन विमलं ज्ञानं लब्ध्वा मोक्षं अवापतुः ।
अतो वच्मि महाबाहो यथा ज्ञानेतरा गतिः ॥ ९ ॥

संसारतरणे नास्ति सङ्गबद्धस्य चेतसः ।
असक्तं निर्मलं चित्तं मुक्तं संसार्यपि स्फुटम् ॥ १० ॥

सक्तं दीर्घतपोयुक्तं अपि बद्धं भवेदिह ।

2 संसक्तिः ।

श्रीराम उवाच —

कीदृशो भगवन् सङ्गो नृणां बन्धाय कीदृशः ॥ ११ ॥

कीदृशो वाऽपि मोक्षाय कथं चैषः चिकित्स्यते।

वसिष्ठ उवाच —

देहदेहिविभागैकपरित्यागेन भावनात्॥ १२॥

देहमात्रे तु विश्वासः सङ्गो बन्धार्ह उच्यते।
आत्मैव खल्विदं सर्वं किं गृह्णामि त्यजामि किम्॥

इत्यसङ्गस्थितिं विद्धि जीवन्मुक्तत्वमुत्थितम्।
नाभिनन्दति नैष्कर्म्यं न कर्मस्वनुरुध्यते॥ १४॥

सुसमो यः फलत्यागी सोऽसंसक्त इति स्मृतः।
असंसङ्गेन सर्वाश्च चेष्टाः नानाविजृम्भिताः॥ १५॥

चिकित्सिता भवन्त्येव श्रेयः संपादयन्ति च।
भूतानि यत् अनन्तानि तरङ्गिणि तरङ्गवत्॥ १६॥

उत्पद्योत्पद्य लीयन्ते तत् संसक्तिविजृम्भितम्।
संसक्तिः द्विविधा प्रोक्ता वन्ध्या वन्द्या च राघव॥

वन्ध्या सर्वत्र मूढानां वन्द्या तत्त्वविदां निजा।
आत्मतत्त्वावबोधेन हीना देहादिवस्तुजा॥ १८॥

भूयः संसारसक्तिर्या दृढा वन्ध्येति कथ्यते।
आत्मतत्त्वावबोधेन सत्यभूतविवेकजा॥ १९॥

वन्द्या हि कथ्यते सक्तिः भूयः संसारवर्जिता।
ब्रह्माद्याः लोकपालाश्च वन्द्यसक्तियुताः स्मृताः॥ २०॥

सर्वदा सर्वसंस्थेन सर्वेण सह तिष्ठता ।
सर्वकर्मरतेनापि मनः कार्यं विजानता ॥ २१ ॥

न सक्तं इह चेष्टासु न चिन्तासु न वस्तुषु ।
केवलं चिति विश्रम्य किंचित् चेत्यावलम्ब्यपि ॥ २२ ॥

सर्वत्र नीरसमिव तिष्ठत्वात्मरसं मनः ।
तत्रस्थो विगतासङ्गो जीवोऽजीवत्वमागतः ॥ २३ ॥

व्यवहारं इमं सर्वं न करोतु करोतु वा ।
अथवा तमपि त्यक्त्वा चेत्यांशं शान्तचिद्घनः ॥ २४ ॥

जीवः तिष्ठतु संशान्तो ज्वलन्मणिरिवात्मनि ।
एषैव राम सौषुप्ती स्थितिः अभ्यासयोगतः ॥ २५ ॥

प्रौढा सती तुरीयेति कथिता तत्त्वकोविदैः ।

3 जीवन्मुक्तसमाचारः ।

यस्तु तस्यां अवस्थायां स्थितिं प्राप्याविनाशिनीम् ॥ २६ ॥

आनन्दैकान्तशीलत्वात् अनानन्दपदं गतः ।
अनानन्दमहानन्दकलातीतः ततोऽपि सः ॥ २७ ॥

मुक्त इत्युच्यते योगी तुर्यातीतपदं गतः ।
दृश्यदर्शननिर्मुक्ता याऽनुभूतिः अनामया ॥ २८ ॥

तां अवष्टभ्य तिष्ठ त्वं सौषुप्तीं तां भज स्थितिम् ।
न मोक्षो नभसः पृष्ठे न पाताले न भूतले ॥ २९ ॥

सर्वाशासंक्षये चेतःक्षयो मोक्ष इतीष्यते ।
मोक्षो मेऽस्त्विति चिन्ताऽन्तः जाता चेत् उत्थितं मनः ॥

मननोत्थे मनस्युच्चैः बन्धः सांसारिको दृढः ।
आत्मन्यतीते सर्वस्मात् सर्वभूतेऽथवाऽऽतते ॥ ३१ ॥

को बन्धः कश्च वा मोक्षो निर्मूलं मननं कुरु ।
द्वन्द्वदोषभयात् मुक्तः तीर्णसंसारसागरः ॥ ३२ ॥

आसानुत्तमविश्रान्तिः लब्धाऽलभ्यपरास्पदम् ।
शरीरात् व्यतिरिक्तं ज्ञं पश्यतः प्रविवेकिनः ॥ ३३ ॥

निकर्तिताङ्गकस्यापि न हि किंचित् निकर्तितम् ।
अनुभूतो गुडः स्वादुः अपि दाहविकर्तनैः ॥ ३४ ॥

न शक्यतेऽन्यथा कर्तुं तत्त्वालोकः तथाऽऽत्मनः ।
परव्यसनिनी नारी व्यग्राऽपि गृहकर्मणि ॥ ३५ ॥

तदेवास्वादयत्यन्तः परसङ्गरसायनम् ।
एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः ॥ ३६ ॥

तदेवास्वादयत्यन्तः बहिः व्यवहरन्नपि ।
नापेक्षते भविष्यच्च वर्तमाने न तिष्ठति ॥ ३७ ॥

न संस्मरत्यतीतं च सर्वमेव करोति च ।
भक्ते भक्तसमाचारः शठे शठ इव स्थितः ॥ ३८ ॥

बालो बालेषु वृद्धेषु वृद्धो धीरेषु धैर्यवान् ।
युवा यौवनवृत्तेषु दुःखितेषु स दुःखधीः ३९ ॥

अपि शीतरुचौ अर्के सुतप्तेऽपीन्दुमण्डले ।
अप्यधः प्रसरत्यग्नौ विस्मयोऽस्य न जायते ॥ ४० ॥

4 चित्तस्पन्दनिरोधः ।

चिदात्मनः इमा इत्थं प्रसरन्तीह शक्तयः ।
इत्यस्याश्चर्यजालेषु नाभ्युदेति कुतूहलम् ॥ ४१ ॥

यथा जलपरिस्पन्दात् व्यतिरिक्त इवाम्भसः ।
दृश्यते वर्तुलावर्तः चित्तस्पन्दात् तथा जगत् ॥ ४२ ॥

श्रीराम उवाच —

येन प्रस्पन्दते चित्तं येन न स्पन्दतेऽथवा ।
तत् ब्रह्मन् ब्रूहि मे येन चिकित्सेयं तदेव हि ॥ ४३ ॥

वसिष्ठ उवाच —

द्वौ क्रमौ चित्तनाशाय योगो ज्ञानं च राघव ।
योगः तद्वृत्तिरोधो हि ज्ञानं सम्यगवेक्षणम् ॥ ४४ ॥

प्राणाधीनपरिस्पन्दं चित्तं आहुः मनीषिणः ।
तस्मिन् संरोधिते नूनं उपशान्तं भवेत् मनः ॥ ४५ ॥

मनःस्पन्दोपशान्त्याऽयं संसारः प्रविलीयते ।
सूर्यालोकपरिस्पन्दशान्तौ व्यवहृतिः यथा ॥ ४६ ॥

श्रीराम उवाच—

प्राणादीनां परिस्पन्दो वायूनां रोध्यते कथम् ।

वसिष्ठ उवाच—

शास्त्रसज्जनसंपर्कवैराग्याभ्यासयोगतः ॥ ४७ ॥

एकतत्त्वघनाभ्यासात् प्राणस्पन्दो निरुध्यते ।
अवासनात् मनोध्यानात् असंस्पृष्टविकल्पतः ॥ ४८ ॥

पूरकाद्यनिलायामात् ओंकारोच्चारणेन वा ।
गुरूक्तान्यक्रमात् वाऽपि प्राणस्पन्दो निरुध्यते ॥ ४९ ॥

अभ्यासेन परिस्पन्दे प्राणानां क्षयमागते ।
मनः प्रशममायाति निर्वाणं अवशिष्यते ॥ ५० ॥

श्रीराम उवाच—

एवं चित्तशमः प्रोक्तः सम्यग्ज्ञानं कथं प्रभो ।

वसिष्ठ उवाच—

यथाभूतार्थदर्शित्वं सम्यग्ज्ञानं भवेत् यतः ॥ ५१ ॥

इमा घटपटाकारपदार्थशतपङ्क्तयः ।
आत्मैव नान्यदस्तीति निश्चयः सम्यगीक्षणम् ॥ ५२ ॥

न चेत्यं अन्यत् नो चित्तं ब्रह्मैवेदं विजृम्भते ।
सर्वं एकं परं ब्रह्म को मोक्षः कस्य बन्धता ॥ ५३ ॥

सम्यक् आलोकिते रूपे काष्ठपाषाणवाससाम् ।
मनागपि न भेदोऽस्ति क्वासि संकल्पनोन्मुखः ॥ ५४ ॥

आदौ अन्ते च संशान्तं स्वरूपं अविनाशि यत् ।
वस्तु नामात्मनश्चैवं तन्मयो भव राघव ॥ ५५ ॥

इति श्रीवासिष्ठसंग्रहे मनोनाशप्रकारो नाम
सप्तदशः सर्गः ॥

---

## ॥ अष्टादशः सर्गः ॥

## ॥ वीतहव्योपाख्यानम् ॥

---

1 प्राणस्पन्दनिरोधः ।

वसिष्ठ उवाच—

अथेमां अपरां राम शृणु दृष्टिं पदप्रदाम् ।
वीतहव्यो मुनिः कश्चित् उद्विग्नो हि क्रियाक्रमात् ॥ १ ॥

निर्विकल्पसमाध्यर्थं संत्यज्य सकलाः क्रियाः ।
उपविश्यासने शुद्धे संजहार मनः शनैः ॥ २ ॥

बाह्यान् आभ्यन्तरांश्चैव स्पर्शान् परिजहत् क्रमात् ।
ततः स्वमनसः स्थैर्यं काङ्क्षमाणो व्यचिन्तयत् ॥ ३ ॥

"अहो नु चञ्चलं चित्तं प्रत्याहृतमपि क्षणात् ।
घटात् पटं उपायाति पटात् शकटमुत्कटम् ॥ ४ ॥

चित्तं अर्थेष्वहो याति पादपेष्विव मर्कटः ।
अहं चेतनमित्येव चित्त त्वं मन्यसे वृथा ॥ ५ ॥

अत्यन्तभिन्नयोः ऐक्यं नास्ति चिन्मनसोः शठ ।
अहङ्कारात् अहं जीवः इत्यपि त्यज भावनाम् ॥ ६ ॥

एतावदेव ते रूपं यावत् नास्ति विचारणम् ।
विचारेणोपशान्तं त्वं आलोकेन तमो यथा ॥ ७ ॥

स्वात्मन्येवावतिष्ठेऽहं तुर्यरूपपदे स्थितः ।
हन्तेन्द्रियगणा यूयं किं निरर्थकमाकुलाः" ॥ ८ ॥

इति चित्तं समाधाय तस्थौ अस्पन्दितेन्द्रियः ।
अन्तरेव शशामास्य क्रमेण प्राणसन्ततिः ॥ ९ ॥

तथैव तिष्ठतस्तस्य संवत्सरशतत्रयम् ।
कायो हि वीतहव्यस्य पङ्केनोर्वीतले कृतः ॥ १० ॥

वर्षत्रयशते याते सोऽबुध्यत स्वयं मुनिः ।
संविदेवास्य तं देहं जग्राहोर्वीनिपीडितम् ॥ ११ ॥

नाभूत प्राणपरिस्पन्दः सर्वच्छिद्रावरोधतः ।
उत्पत्तिप्रौढिमासाद्य हृद्येवानुबभूव सः ॥ १२ ॥

कैलासाद्रौ मुनिर्भूत्वा संवत्सरशतं ततः।
विद्याधरत्वमिन्द्रत्वं शम्भोश्च गणतां ततः ॥ १३ ॥

प्रतिभासवशादेवानुभूय स्वयमिच्छया।
प्राग्जन्मसु भवान् देहान् दृष्ट्वा चिन्तावशः पुनः ॥

पङ्कमग्नं इमं देहं उद्धर्तुं रविमाविशत्।
भानुनाऽथाभ्यनुज्ञातं वीतहव्याभिधं मनः ॥ १५ ॥

प्रविश्य पिङ्गलाकारं गत्वा विन्ध्यस्य कन्दरम्।
उद्धृत्य च धराकोशात् स्वं देहं प्रविवेश सः ॥ १६ ॥

ततः स्नात्वा जपं कृत्वा संपूज्य च दिवाकरम्।
वीतहव्यो यथापूर्वं प्रज्ञया भूषितो बभौ ॥ १७ ॥

2 चित्तसमाधानम्।

दिनान्ते स समाधातुं पुनरेव मनो दधे।
"इदानीं चिन्तया नार्थः ततः तिष्ठामि शैलवत् ॥ १८ ॥

कलनां अस्ति नास्तीति भङ्क्त्वाऽतिस्वच्छतां गतः"।
इति संचिन्त्य स ध्याने पुनस्तस्थौ दिनानि षट् ॥ १९ ॥

ततः प्रबोधमापन्नः क्षणसुप्त इवाध्वगः।
ततः सिद्धः चिरं कालं जीवन्मुक्ततया स्थितः ॥ २० ॥

विदेहकेवलीभावे वाञ्छां प्राप्य ततः क्रमात् ।
बद्धपद्मासनः स्थित्वा तत्रोवाचात्मनाऽऽत्मनि ॥ २१ ॥

"राग नीरागतां गच्छ, द्वेष निर्द्वेषतां व्रज ।
भवद्भ्यां सुचिरं कालं इह प्रक्रीडितं मया ॥ २२ ॥

भोगा नमोऽस्तु युष्मभ्यं जन्मकोटिशतान्यहम् ।
भवद्भिः लालितो लोके लालकैरिव बालकः ॥ २३ ॥

इमामपि परां पुण्यां निर्वाणपदवीं अहम् ।
येन विस्मारितः तस्मै सुखायास्तु नमो नमः ॥ २४ ॥

त्वदुत्तसेन हे दुःख मयाऽऽत्माऽन्विष्ट आदरात् ।
तस्मात् त्वदुपदिष्टोऽयं मम मार्गो नमोऽस्तु ते ॥ २५ ॥

मित्र काय मयाऽद्य त्वं त्यज्यसे चिरबान्धवः ।
अधिगम्यात्मविज्ञानं स्वस्य नाशः कृतः त्वया ॥ २६ ॥

एकाकिन्या विशुष्यन्त्या प्रशान्ते मयि दीनया ।
त्वया दुःखं न कर्तव्यं मातः तृष्णे नमोऽस्तु ते ॥

क्षन्तव्याः काम भगवन् विपरीतापराधजाः ।
दोषा उपशमैकान्तं व्रजाम्यादिश मङ्गलम् ॥ २८ ॥

नमः सुकृतदेवाय भवतेऽस्तु त्वया पुरा ।
नरकेभ्यः समुत्तार्य स्वर्गेऽहं अभियोजितः ॥ २९ ॥

भवन्तः सहजाः प्राणाः प्राक्तनाः सुहृदो मया ।
क्रमेणाद्योरक्कता नूनं स्वस्ति वोऽस्तु व्रजाम्यहम्" ॥

### 3 कैवलीभावः ।

एवं कलितवान् अन्तः प्रशान्तमननैषणः ।
शनैरुच्चारयंस्तारं प्रणवं प्राप्तभूमिकः ॥ ३१ ॥

जहौ इन्द्रियतन्मात्रं तमोमात्रं जहौ ततः ।
उत्तिष्ठत्प्रस्फुरद्रूपं क्षणं तेजो विचार्य सः ॥ ३२ ॥

त्यक्त्वा तं च बभूवाथ न तमो न प्रकाशनम् ।
तामवस्थामथासाद्य निमेषार्धात् मनोऽपतत् ॥ ३३ ॥

ततोऽङ्गसंविदं स्वस्थां प्रतिभासं उपागताम् ।
निमेषार्धार्धभागेन कालेन कलनां जहौ ॥ ३४ ॥

पश्यन्तीपदमासाद्य सत्तामात्रात्मकं ततः ।
सुषुप्तपदमालम्ब्य तस्थौ गिरिरिवाचलः ॥ ३५ ॥

सुषुप्ते स्थैर्यमासाद्य तुर्यरूपं उपाययौ ।
निरानन्दोऽपि सानन्दः सच्चासच्चाऽपि तत्र सः ॥ ३६ ॥

चिन्मयोऽचिन्मयश्चापि नेति नेति यदुच्यते ।
ततः तत् संबभूवासौ यत् गिरामप्यगोचरः ॥ ३७ ॥

पुरुषो यो हि सांख्यानां ब्रह्म ब्रह्मविदां तथा ।
शिवः शैवमतस्थानां सर्वं सुसमचेतसाम् ॥ ३८ ॥

यत् सर्वशास्त्रसिद्धान्तो यत् सर्वहृदयानुगम् ।
यत् अनुत्तमनिष्पन्दं दीपकं तेजसामपि ॥ ३९ ॥

स्वानुभूत्येकमात्रं च सर्वं च सर्वगं तथा ।
यत् एकं चाप्यनेकं च विजरामरणं पदम् ॥ ४० ॥

त्रिंशद्वर्षसहस्राणि विहृत्यैवं यथासुखम् ।
वीतहव्यः शशामैवं पुनर्जन्मविवर्जितः ॥ ४१ ॥

4 चित्तनाशो द्विविधः ।

श्रीराम उवाच—

जीवन्मुक्तशरीराणां कथं आत्मविदां वर ।
शक्तयो नेह दृश्यन्ते आकाशगमनादिकाः ॥ ४२ ॥

वसिष्ठ उवाच—

अनात्मवित् अमुक्तोऽपि नभोविहरणादिकम् ।
द्रव्यमन्त्रक्रियाकालशक्त्या प्राप्नोति राघव ॥ ४३ ॥

नात्मज्ञस्यैष विषयः आत्मज्ञो ह्यात्मदृक् स्वयम् ।
यस्येच्छा विद्यते काचित् स सिद्धीः साधयत्वलम् ॥

आत्मज्ञस्य तु पूर्णस्य नेच्छा संभवति क्वचित् ।
परमात्मपदप्राप्तौ नोपकुर्वन्ति सिद्धयः ॥ ४५ ॥

श्रीराम उवाच —

वीतहव्यतनुर्मग्ना कथं क्लिन्ना न भूतले ।

वसिष्ठ उवाच—

सबाह्याभ्यन्तरः स्पन्दः चित्तजो वातजोऽथवा ॥ ४६ ॥

न यस्य विद्यते तस्य दूरस्थौ विकृतिक्षयौ ।
सबाह्याभ्यन्तरे शान्ते स्पन्दे पवनचेतसोः ॥ ४७ ॥

धातवः संस्थितिं देहे न त्यजन्ति कदाचन ।
ये तु विज्ञातविज्ञेयाः वीतरागा महाधियः ॥ ४८ ॥

विच्छिन्नग्रन्थयः सर्वे ते स्वतन्त्राः तनौ स्थिताः ।

श्रीराम उवाच —

विवेकाभ्युदयात् चित्तस्वरूपेऽन्तर्हिते मुनेः ॥ ४९ ॥

मैत्र्यादयो गुणाः कुत्र जायन्ते मां प्रभो वद ।

वसिष्ठ उवाच—

द्विविधः चित्तनाशोऽस्ति सरूपोऽरूप एव च ॥ ५० ॥

जीवन्मुक्तौ सरूपः स्यात् अरूपोऽदेहमुक्तिजः ।
चित्तसत्तेह दुःखाय चित्तनाशः सुखाय तु ॥ ५१ ॥

चित्तसत्तां क्षयं नीत्वा चित्तनाशं उपानयेत् ।
सुखदुःखाद्यवष्टब्धं असमीत्येव विनिश्चलम् ॥ ५२ ॥

विद्यमानं मनो विद्धि संसारद्रुमदोहदम्।
सुखदुःखदशाः आपत् मदो मान्द्यं महोत्सवः ॥ ५३ ॥

यं नयन्ति न वैरूप्यं तस्य नष्टं मनो विदुः।
मैत्र्यादिभिः गुणैः युक्तं भवत्युत्तमवासनम् ॥ ५४ ॥

भूयोजन्मविनिर्मुक्तं जीवन्मुक्तस्य तन्मनः।
सरूपोऽसौ मनोनाशः यत्र भान्ति गुणा इमे ॥ ५५ ॥

अरूपस्तु मनोनाशः विदेहमुक्तिजो भवेत्।
समग्राग्र्यगुणाधारं अपि सत्त्वं प्रलीयते ॥ ५६ ॥

चित्तनाशे विरूपाख्ये न किंचिदपि विद्यते।
न गुणाः नागुणाः तत्र न हर्षामर्षसंविदः ॥ ५७ ॥

इति श्रीवासिष्ठसंग्रहे वीतहव्योपाख्यानं नाम
अष्टादशः सर्गः ॥

---

## ॥ एकोनत्रिंशः सर्गः ॥

---

# ॥ चित्तप्रशमनम् ॥

### 1 चित्तस्य द्वे बीजे ।

श्रीराम उवाच—

ब्रह्मन् संसृतिमृद्वीकालतायाः विततात्कृतेः ।
किं बीजं तस्य किं बीजं बीजं तस्यापि किं भवेत् ॥ १ ॥

वसिष्ठ उवाच—

संसृतिव्रततेः बीजं शरीरं विद्धि राघव ।
बीजमस्य शरीरस्य चित्तं आशावशानुगम् ॥ २ ॥

द्वे बीजे चित्तवृक्षस्य वृत्तिव्रततिधारिणः ।
एकं प्राणपरिस्पन्दो द्वितीयं दृढभावना ॥ ३ ॥

यदा प्रस्पन्दते प्राणः नाडीसंस्पर्शनोद्यतः ।
तदा संवेदनमयं चित्तं आशु प्रजायते ॥ ४ ॥

सती सर्वसमा संवित् प्राणस्पन्देन बोधिता ।
संवेद्यं आदरात् याति ततो दुःखानि चेतसः ॥ ५ ॥

योगिनः चित्तशान्त्यर्थं कुर्वन्ति प्राणरोधनम् ।
चित्तस्योत्पत्तिमपरां वासनाजनितां शृणु ॥ ६ ॥

दृढभावनया त्यक्तपूर्वापरविचारणम् ।
यत् आदानं पदार्थस्य वासना सा प्रकीर्तिता ॥ ७ ॥

भावितं तीव्रसंवेगात् आत्मना यत् तदेव सः ।
भवत्याशु च तद्रूपो वासनाविवशीकृतः ॥ ८ ॥

प्रपश्यति यदेवैतत् सद्वस्त्विति विमुह्यति ।
वासनावेगवैवश्यात् स्वरूपं प्रजहाति सः ॥ ९ ॥

यत् अवस्तुनि वस्तुत्वं तत् चित्तं विद्धि राघव ।
दृढाभ्यासं पदार्थैकवासनात् अतिचञ्चलम् ॥ १० ॥

चित्तं संजायते जन्मजरामरणकारणम् ।
यदा न वास्यते किंचित् हेयोपादेयरूपि यत् ॥ ११ ॥

स्थीयते सकलं त्यक्त्वा तदा चित्तं न जायते ।
सर्वं अन्तः परित्यज्य शीतलाशयवर्ति यत् ॥ १२ ॥

वृत्तिस्थमपि तत् चित्तं असद्रूपं उदाहृतम् ।
भ्रष्टबीजोपमा येषां वासना रसवर्जिता ॥ १३ ॥

अचित्ताः इति कथ्यन्ते जीवन्मुक्ता हि ते स्थिताः ।
वासनावशतः प्राणस्पन्दः तेन च वासना ॥ १४ ॥

जायते चित्तबीजस्य तेन बीजाङ्कुरक्रमः ।
एकस्मिंस्तु तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः ॥ १५ ॥

2 असंवेदनम् ।

संवेद्यं एतयोः बीजं तत्त्यागात् नश्यति द्वयम् ।
संविदं विद्धि संवेद्यबीजं राम तया विना ॥ १६ ॥

न संभवति संवेद्यं तैलहीनः तिलो यथा ।
संवेदनं अनन्ताय दुःखाय जननात्मने ॥ १७ ॥

असंवित्तिः अजाड्यस्था सुखायाजननात्मने ।

श्रीराम उवाच —

असंवित्तिः अजाड्यस्था कीदृशी भवति प्रभो ॥ १८ ॥

असंवित्तौ च जाड्यं तत् कथं वा विनिवर्तते ।

वसिष्ठ उवाच —

यः सर्वत्रानवस्थास्थो विश्रान्तास्थो न कुत्रचित् ॥ १९ ॥

जीवो न विन्दते किंचित् असंवित् अजडो हि सः ।
जीवन्मुक्तः स विज्ञेयः कुर्वन् कार्यशतान्यपि ॥ २० ॥

समस्तवासनां त्यक्त्वा निर्विकल्पसमाश्रितः ।
आनन्दित्वं भवेद्यच्च तदप्यन्तर्विलीयते ॥ २१ ॥

अजडो गलितानन्दः त्यक्तसंवेदनः सुखी ।
तरेत् दुःखाम्बुधेः पारं अपारगुणसागरम् ॥ २२ ॥

अथास्याः संविदो राम सन्मात्रं बीजमुच्यते ।
द्वे रूपे तत्र सत्तायाः नाना चैकमिति स्मृते ॥ २३ ॥

घटता पटता तत्ता त्वत्ता मत्तेति कथ्यते ।
सत्तारूपविभागेन यत् तत् नानाकृति स्मृतम् ॥ २४ ॥

विशेषं संपरित्यज्य सन्मात्रं यत् अलेपकम् ।
एकरूपं महारूपं सत्तायाः तत् पदं विदुः ॥ २५ ॥

सत्तासामान्यमात्रस्य या कोटिः परमावधिः ।
सैवास्य जगतो बीजं यतः तस्या हि जायते ॥ २६ ॥

तत् हेतुः सर्वहेतूनां तस्य बीजं न विद्यते ।
स सारः सर्वसाराणां तस्मात् सारो न विद्यते ॥ २७ ॥

तस्मिंश्चावगते चेतः शान्तिं आप्नोति नैष्ठिकीम् ।

श्रीराम उवाच —

एतानि तानि प्रोक्तानि त्वया बीजानि मानद ॥ २८ ॥

कतमस्य प्रयोगेण शीघ्रं आसाद्यते पदम् ।

वसिष्ठ उवाच —

एतेषां दुःखबीजानां प्रोक्तं यत् यत् मयोत्तरम् ॥ २९ ॥

तस्य तस्य प्रयोगेण शीघ्रं आसाद्यते पदम् ।
सत्तासामान्यकोटिस्थे द्रागित्येव पदे यदि ॥ ३० ॥

मिथः कारणतां गत्वा दुःसाध्यानि भवन्ति हि ।
तस्मात् राघव यत्नेन पौरुषेण विवेकतः ॥ ३९ ॥

भोगेच्छां दूरतः कृत्वा त्रयं एतत् समाश्रयेत् ।
समकालं चिराभ्यस्ताः भवन्ति फलदाः मुनेः ॥ ४० ॥

त्रिभिः एभिः चिराभ्यस्तैः त्रुट्यन्ति ग्रन्थयोऽखिलाः ।
वासनासंपरित्यागसमं प्राणनिरोधनम् ॥ ४१ ॥

प्राणायामदृढाभ्यासैः युक्त्या च गुरुदत्तया ।
आसनाशनयोगेन प्राणस्पन्दो निरुध्यते ॥ ४२ ॥

अध्यात्मविद्याधिगमः साधुसङ्गम एव च ।
वासनासंपरित्यागः प्राणस्पन्दनिरोधनम् ॥ ४३ ॥

सतीषु युक्तिष्वेतासु हठात् नियमयन्ति ये ।
चेतः ते दीपमुत्सृज्य विनिघ्नन्ति तमोऽञ्जनैः ॥ ४४ ॥

## 4 अध्यात्मविचारः ।

तस्मात् एतां परित्यज्य दुर्दृष्टिं रघुनन्दन ।
शुद्धां संविदमाश्रित्य वीतरागः स्थिरो भव ॥ ४५ ॥

किं इदं स्यात् जगत् किं स्यात् अहं इत्यनिशं शनैः ।
विचारयाध्यात्मदृशा स्वयं वा सज्जनैः सह ॥ ४६ ॥

पौरुषेण प्रयत्नेन बलात् संत्यज्य वासनाः ।
स्थितिं बध्नासि चेत् साधु पदं प्राप्नोषि तत्क्षणे ॥ ३१ ॥

सत्तासामान्यरूपे वा करोषि स्थितिमङ्ग चेत् ।
तत्किंचिदधिकेनैव यत्नेनाप्नोषि तत्पदम् ॥ ३२ ॥

संवित्तत्त्वे कृतध्यानो यदि तिष्ठसि राघव ।
तद्यत्नेनाधिकेनोच्चैः आस्वादयसि तत्पदम् ॥ ३३ ॥

3 मनोनाशादित्रयम् ।

संवेद्ये केवले ध्यानं नैव सिध्यत्यसंभवात् ।
वासनासंपरित्यागे यदि यत्नं करोषि च ॥ ३४ ॥

तत् ते शिथिलतां यान्ति सर्वाधिव्याधयः क्षणात् ।
यावत् न लीयते चित्तं न तावत् वासनाक्षयः ॥ ३५ ॥

न क्षीणा वासना यावत् तावत् चित्तं न शाम्यति ।
यावत् न तत्त्वविज्ञानं न तावत् चित्तसंक्षयः ॥ ३६ ॥

न चित्तोपशमो यावत् न तावत् तत्त्ववेदनम् ।
यावत् न वासनानाशः तावत् तत्त्वावगमः कुतः ॥

यावत् न तत्त्वसंप्राप्तिः न तावत् वासनाक्षयः ।
तत्त्वज्ञानं मनोनाशो वासनाक्षय एव च ॥ ३८ ॥

विचारोत्थात्मविज्ञानं ज्ञानस्याङ्गं विदुः बुधाः ।
ज्ञानाभिगममात्रेण स्वयं चित्तं प्रसीदति ॥ ४७ ॥

अतत्त्वज्ञं अविश्रान्तं अलब्धात्मानं अस्थितिम् ।
निगिरन्तीन्द्रियाण्याशु हरिणा इव पल्लवम् ॥ ४८ ॥

सङ्गः कारणमर्थानां सङ्गः संसारकारणम् ।
सङ्गः कारणमाशानां सङ्गः कारणमापदाम् ॥ ४९ ॥

मलिना वासना यैषा सा सङ्ग इति कथ्यते ।
जीवन्मुक्तशरीराणां अपुनर्जन्मकारिणी ॥ ५० ॥

मुक्ता हर्षविषादाभ्यां शुद्धा भवति वासना ।
अजीवन्मुक्तरूपाणां दीनानां मूढचेतसाम् ॥ ५१ ॥

कथ्यते सङ्गशब्देन वासना भवकारिणी ।
संपदि विपदि चात्मा यदि ते लक्ष्यते समः ॥ ५२ ॥

दुःखैः न ग्लानिमायासि यदि हृष्यसि नो सुखैः ।
यथाप्राप्तानुवर्ती च तदाऽसङ्गोऽसि राघव ॥ ५३ ॥

इति श्रीवासिष्ठसंग्रहे चित्तप्रशमनं नाम
एकोनविंशः सर्गः ॥

---

॥ त्रिंशः सर्गः ॥

# ॥ चिदात्मभावना ॥

---

## 1 भ्रमकारणम् ।

वसिष्ठ उवाच—

दिक्कालाद्यनवच्छिन्नं शान्तं चिन्मात्रमक्षयम् ।
ब्रह्मैवाहमिति स्थित्वा मौनी स्वात्मसुखो भव ॥ १ ॥

अज्ञानकलना यावत् यावदब्रह्मभावना ।
यावदास्था जगज्जाले दृश्ये यावच्च सत्यता ॥ २ ॥

देहे यावदहंभावस्तावत् चित्तादिकल्पना ।
भोगेष्वनास्थचित्तस्य शीतलामलनिर्वृतेः ॥ ३ ॥

छिन्नाशापाशजालस्य क्षीयते चित्तविभ्रमः ।
अन्तर्मुखतया सर्वं चिद्वह्नौ त्रिजगत्तृणम् ॥ ४ ॥

जुह्वतोऽन्तर्निवर्तन्ते मुनेः चित्तादिविभ्रमाः ।
चित्तं ज्ञानाग्निना दग्धं न भूयः परिरोहति ॥ ५ ॥

सर्वेषामपि जीवानां स्थितैवैषा चिदव्यया ।
किन्त्वबोधवशादस्याः सर्वे कृपणतां गताः ॥ ६ ॥

अज्ञानं आपदां निष्ठा का हि नापदजानतः ।
इयं संसारसरणिः वहत्यज्ञप्रमादतः ॥ ७ ॥

संवेद्येनापरामृष्टं शान्तं सर्वात्मकं च यत् ।
तत् सच्चिदाभासमयं अस्तीह कलनोज्झितम् ॥ ८ ॥

## 2 अविद्याविभागः ।

समुदेति स्वतस्तस्मात् कलाकलनरूपिणी ।
सूक्ष्मा मध्या तथा स्थूला चेति सा कल्प्यते त्रिधा ॥

सत्त्वं रजस्तम इति चैषैव प्रकृतिः स्मृता ।
एषैव संसृतिः जन्तोः अस्याः पारं परं पदम् ॥ १० ॥

अत्र ये तु त्रयः प्रोक्ताः गुणास्तेऽपि त्रिधा स्मृताः ।
नवधैवं विभक्तेयं अविद्या गुणभेदतः ॥ ११ ॥

सात्त्विकस्यास्य भागस्य नागाः विद्याधराः तमः ।
रजस्तु मुनयः सिद्धाः सत्त्वं देवा हरादयः ॥ १२ ॥

शुद्धं सत्त्वं ह्यविद्यायाः भागो विद्येति कथ्यते ।
तिष्ठन्ति ज्ञानिनो मुक्ताः यावद्देहं जगत्स्थितौ ॥ १३ ॥

मौर्ख्यपिण्डः स्थावरादिः तामस्या अवधिं गतः ।
चलामनस्त्वं अप्राप्तं मनस्त्वादपि च च्युतम् ॥ १४ ॥

सुप्तपुर्यष्टका यत्र चित् स्थिता दुःखदायिनी।
मूकान्धजडवत् तत्र सत्तामात्रेण तिष्ठति ॥ १५ ॥

श्रीराम उवाच —

सत्तामात्रेण संस्थानं मुक्तेः संनिहितं खलु।

वसिष्ठ उवाच —

बुद्धिपूर्वं विचार्यैव यथावस्त्ववलोकनात् ॥ १६ ॥

सत्तासामान्यबोधो यः स मोक्षः स्यात् न चान्यथा।
परिज्ञाय परित्यागो वासनानां अपेक्ष्यते ॥ १७ ॥

अन्तः सुप्ता स्थिता मन्दा यत्र बीज इवांकुरः।
वासना तत् सुषुप्तत्वं विद्धि जन्मप्रदं पुनः ॥ १८ ॥

स्थावरादय एते हि सुषुप्तपदमाश्रिताः।
तेषां अन्तः स्थिता एव वासनाः बीजरूपतः ॥ १९ ॥

यत्रास्ति वासनाबीजं तत् सुषुप्तं न सिद्धये।
निर्बीजा वासना यत्र तत् तुर्यं सिद्धिदं स्मृतम् ॥ २० ॥

वासनायाः तथा वन्हेः ऋणव्याधिद्विषामपि।
स्नेहवैरविषाणां च शेषः स्वल्पोऽपि बाधते ॥ २१ ॥

निर्दग्धवासनाबीजः सत्तासामान्यरूपवान्।
सदेहो वा विदेहो वा न भूयो दुःखभाग्भवेत् ॥ २२ ॥

आत्मदृष्टिः अदृष्टैषा संसारभ्रमदायिनी ।
दृष्टा सती समग्राणां दुःखानां क्षयकारिणी ॥ २३ ॥

अस्यास्त्वदर्शनं यत् तत् अविद्येत्युच्यते बुधैः ।
अविद्या हि जगद्धेतुः ततः सर्वं प्रवर्तते ॥ २४ ॥

3 अनुसन्धानक्रमः ।

एतावदेवाविद्यात्वं नेदं ब्रह्मेति निश्चयः ।
एष एव क्षयोऽस्याः यत् ब्रह्मेदमिति निश्चयः ॥ २५ ॥

अभ्यासेन विना राम नोदेति ब्रह्मभावना ।
ब्रह्म चित् ब्रह्म भुवनं ब्रह्म भूतपरम्परा ॥ २६ ॥

ब्रह्माहं ब्रह्म मच्छत्रुः ब्रह्म मन्मित्रबान्धवाः ।
सर्वमेव हि ब्रह्मेति भाविते़ऽतिसुखी किल ॥ २७ ॥

दुःखौघमयं अज्ञस्य ज्ञस्यानन्दमयं जगत् ।
अन्धं भुवनं अन्धस्य प्रकाशं तु सचक्षुषः २८ ॥

"प्रशान्तसर्वसङ्कल्पं चिदात्मानं उपास्महे ।
शब्दरूपरसस्पर्शगन्धैः आभाससमागतम् ॥ २९ ॥

तैरेव रहितं शान्तं चिदात्मानं उपास्महे ।
महामहिमसंयुक्तं रहितं सर्वभूतिभिः ॥ ३० ॥

कर्तृत्वे वाऽप्यकर्तारं चिदात्मानं उपास्महे" ।
इति निश्चित्य ये सत्ये पदे सुखमवस्थिताः ॥ ३१ ॥

न नन्दन्ति न निन्दन्ति जीवितं मरणं तथा ।
मनस्तेषां तु नीरागं अनुपाधि गतभ्रमम् ॥ ३२ ॥

असक्तं मुक्तमाशान्तं परं सत्त्वपदं गतम् ।
प्राकृताचारसंप्राप्ते कुर्वन्तः कर्म केवलम् ॥ ३३ ॥

स्थिता विगतसंरम्भं अपरा इव मेरवः ।

4 द्विविधो योगः ।

श्रीराम उवाच—

प्राणस्पन्दनिरोधेन वासनाविलयोदये ॥ ३४ ॥

जीवन्मुक्तपदे ब्रह्मन् वद विश्रम्यते कथम् ।

वसिष्ठ उवाच—

संसारोत्तरणे युक्तिः योगशब्देन कथ्यते ॥ ३५ ॥

तां विद्धि द्विप्रकारां त्वं चित्तोपशमधर्मिणीम् ।
आत्मज्ञानप्रकारोऽथ प्राणानां संयमस्तथा ॥ ३६ ॥

प्रकारौ द्वावपि प्रोक्तौ योगशब्देन यद्यपि ।
तथाऽपि रूढिमायातः प्राणयुक्तौ असौ भृशम् ॥ ३७ ॥

समौ उपायौ शास्त्रोक्तौ नूनं एकफलप्रदौ ।
असाध्यः कस्यचित् योगः कस्यचित् ज्ञाननिश्चयः ॥३८॥

मम त्वभिमतो राम सुसाध्यो ज्ञाननिश्चयः ।
तयोः ज्ञानं तव प्रोक्तं योगोऽयं प्रोच्यते शृणु ॥ ३९ ॥

इति श्रीवासिष्ठसंग्रहे चिदात्मभावना नाम
विंशः सर्गः ॥

---

॥ एकविंशः सर्गः ॥

---

## ॥ भुशुण्डोपाख्यानम् ॥

### 1 भुशुण्डोत्पत्तिः ।

वसिष्ठ उवाच —

अत्र ते कथयिष्यामि वृत्तान्तं परमाद्भुतम् ।
शातातपो मुनिः प्राह पुराऽऽस्थाने शतक्रतोः ॥ १ ॥

मेरोः ईशानकोणस्थकल्पवृक्षस्य मूर्धनि ।
कश्चित् निवसति श्रीमान् भुशुण्डो नाम वायसः ॥ २ ॥

स विश्रान्तमतिः शान्तो वीतरागो महामतिः ।
चिरंजीवी तथा स्वर्गे न भूतो न भविष्यति ॥ ३ ॥

इदं श्रुत्वा च तं द्रष्टुं अहं यातः कुतूहलात् ।
कल्पद्रुमस्थमद्राक्षं भुशुण्डं द्विजसेवितम् ॥ ४ ॥

अशङ्कितमपि प्राप्तं वसिष्ठमवबुध्य माम् ।
अर्घ्यपाद्यादि संपाद्य मां उवाच खगाधिपः ॥ ५ ॥

"किमर्थं अद्यागमनं आज्ञां मे दातुमर्हसि" ।
इत्युक्तोऽहं तदाऽपृच्छं "जातः कस्मिन् कुले भवान् ॥

कियत् आयुश्च ते साधो ज्ञातज्ञेयः कथं भवान्" ।
इति पृष्टो भुशुण्डोऽसौ प्रवक्तुमुपचक्रमे ॥ ७ ॥

भुशुण्ड उवाच —

हरस्य प्रमथा यद्वत् परिवारो हि मातरः ।
जया च विजया चैव जयन्ती चापराजिता ॥ ८ ॥

सिद्धा रक्ताऽलंबुसा चाप्युत्पला चेति विश्रुताः ।
कदाचित् मिलिताः चक्रुः उत्सवं परमं मुदा । ९ ॥

तदा तासां च वाहाश्च ननृतुः पपुरासवम् ।
वज्रास्थितुण्डः चण्डाख्यः काको ह्यलंबुसारथः ॥ १० ॥

रथहंस्यः स्थिता ब्राह्मयः तेन काकेन रेमिरे ।
अथ ताः गर्भधारिण्यः सुवते स्माण्डजान् क्रमात् ॥११॥

वैरिञ्चे सरसि स्फारे तनयान् एकविंशतिम् ।
एवं ताभ्यस्तु हंसीभ्यो जाता वयं इमे मुने ॥ १२ ॥

## 2 कल्पान्तेषु स्थितिः ।

मातृभिः सह हंसीभिः ब्राह्मी भगवती ततः ।
चिरं आराधिताऽस्माभिः प्रसादपरया ततः ॥ १३ ॥

तथैवानुगृहीताः स्मो यथा मुक्ता वयं स्थिताः ।
संवृसमनसः शान्तास्त्वेकान्ते ध्यानसंस्थितौ ॥ १४ ॥

तिष्ठाम इति निश्चित्य पितुः पार्श्वे वयं गताः ।
तेनायं सर्वबाधानां अगम्यः कल्पपादपः ॥ १५ ॥

कथितं स्थानमस्माकं तिष्ठामोऽत्र गतज्वराः ।
अद्य मे सफलं पुण्यं भवदागमनेन हि" ॥ १६ ॥

इत्युक्त्वोपरते तस्मिन् इदं रामाहमुक्तवान् ।
"भ्रातरस्ते विहङ्गेश तादृक्सत्त्वा महाधियः ॥ १७ ॥

इह कस्मात् न दृश्यन्ते त्वमेवैको हि दृश्यसे" ।
भुशुण्ड उवाच—
तिष्ठतां इह नः कालो महान् अतिगतो मुने ॥ १८ ॥

युगानां पङ्क्तयः क्षीणाः कल्पानां च महामते ।
एतावता च कालेन सर्वे एव ममानुजाः ॥ १९ ॥

तनूः तृणमिव त्यक्त्वा शिवे परिणताः पदे ।
दीर्घायुषो महान्तोऽपि सन्तोऽपि बलिनोऽपि च ॥ २० ॥

सर्वे एव निगीर्यन्ते कालेनाकलितात्मना ।
इत्युक्तेन मया पृष्टो भुशुण्डो वायसाधिपः ॥ २१ ॥

"कल्पान्तेषु महाबुद्धे वहत्सूत्पातवायुषु ।
प्रतपत्स्विन्दुभार्केषु कथं तिष्ठसि विज्वरः" ॥ २२ ॥

भुशुण्ड उवाच—

यदा शाम्यति कल्पान्ते व्यवहारो जगद्गतः ।
आकाश एव तिष्ठामि विगताखिलकल्पनः ॥ २३ ॥

प्रतपन्ति यदाऽऽदित्याः व्योमाङ्गणगतो ह्यहम् ।
वारुणीं धारणां बद्ध्वा तदा तिष्ठामि धीरधीः ॥ २४ ॥

यदा शकलिताद्रीन्द्राः वान्ति प्रलयवायवः ।
पार्वतीं धारणां बद्ध्वा खे तिष्ठाम्यचलं तदा ॥ २५ ॥

जगद्गलितमेर्वादि यात्येकार्णवतां यदा ।
वायवीं धारणां बद्ध्वा संप्लवेऽचलधीः तदा ॥ २६ ॥

ब्रह्माण्डपारमासाद्य तत्रान्ते विमले पदे ।
सुषुप्तावस्थया तावत् तिष्ठाम्यचलरूपया ॥ २७ ॥

### 3 चिचित्रानुभवः ।

यावत् पुनः कमलजः सृष्टिकर्मणि तिष्ठति ।
तावत् प्रविश्य ब्रह्माण्डं तिष्ठामि विहगालये ॥ २८ ॥

मत्संकल्पवशेनैव कल्पे कल्पे पुनः पुनः ।
अस्मिन्नेव गिरेः शृङ्गे तरुः इत्थं भवत्ययम् ॥ २९ ॥

वसिष्ठ उवाच —

यथा तिष्ठसि पक्षीन्द्र धारणाभिः अखण्डितः ।
कल्पान्तेषु तथा कस्मात् नान्ये तिष्ठन्ति योगिनः ॥

भुशुण्ड उवाच —

ब्रह्मन् नियतिरेषा हि दुर्लङ्घ्या पारमेश्वरी ।
ईदृशेन मया भाव्यं भाव्यं नान्यैश्च तादृशैः ॥ ३१ ॥

वसिष्ठ उवाच —

किं किं स्मरसि कल्याण चित्तमस्मिन् जगत्क्रमे ।

भुशुण्ड उवाच —

अशैलवनवृक्षौघां स्मरामीमां धरां अधः ॥ ३२ ॥

जन्मेन्दुभास्करादीनां इन्द्रोपेन्द्रव्यवस्थितिम् ।
हिरण्याक्षापहरणं वराहोद्धरणं क्षितेः ॥ ३३ ॥

सागराणां समुद्भूतिं अमृतार्थं च मन्थनम् ।
मुने ते ब्रह्मपुत्रस्य जन्माष्टमं इदं किल ॥ ३४ ॥

रेणुकापुत्रतां यातः षष्ठवारं इमं हरिः ।
त्रिंशत् त्रिपुरविक्षोभान् द्वौ दक्षाध्वरसंक्षयौ ॥ ३५ ॥

स्मरामि द्वादशं चेदं अमृताम्भोधिमन्थनम् ।
अधुनैकादशं जन्म रामनाम्ना हरेः भवेत् ॥ ३६ ॥

वसुदेवगृहे चापि भविता जन्म षोडशम् ।
भ्रान्तिरेषा जगद्रूपा न कदाचन विद्यते ।। ३७ ।।

विद्यते तु कदाचिच्च जलबुद्बुदवत् स्थिता ।

4　प्राणचिन्ता ।

वसिष्ठ उवाच —

चरतां जगतः कोशे व्यवहारवतां अपि ।। ३८ ।।

कथं विहगराजेन्द्र देहं मृत्युः न बाधते ।

भुशुण्ड उवाच —

दोषमुक्ताफलप्रोता वासनातन्तुसंततिः ।। ३९ ।।

हृदि न ग्रथिता यस्य मृत्युः तं न जिघांसति ।
आशा यं न दहत्यन्तः मृत्युः तं न जिघांसति ।। ४० ।।

कामक्रोधादिहीनो यः मृत्युः तं न जिघांसति ।
यस्य चित्तं सुविश्रान्तं पदे परमपावने ।। ४१ ।।

न चञ्चलं मनो यस्य तं मृत्युः न जिघांसति ।
एते ब्रह्मन् महादोषाः संसारव्याधिहेतवः ।। ४२ ।।

मनागपि न लुम्पन्ति चित्तं एकसमाहितम् ।
आत्मचिन्ता महाश्रेष्ठा सर्वसंकल्पवर्जिता ।। ४३ ।।

सर्वदुःखक्षयकरी सर्वसौभाग्यवर्धिनी ।
कारणं जीवितस्येह प्राणचिन्ता समाश्रिता ।। ४४ ।।

एवं उक्ते मया पृष्टः "प्राणचिन्ता किमुच्यते" ।
भुशुण्डो मां ततः प्राह "प्राणापानौ इति श्रुतौ ॥ ४५॥

ऊर्ध्वाधः किल देहेऽस्मिन् प्रसृतौ अनिलौ उभौ ।
कलेबरमहायन्त्रवाहयोः श्रमहीनयोः ॥ ४६ ॥

हृदाकाशार्कशशिनोः अग्नीषोमस्वरूपयोः ।
जाग्रत्स्वप्नसुषुप्तेषु सदैव समरूपयोः ॥ ४७ ॥

दुर्लक्ष्या विद्यमानाऽपि गतिः सूक्ष्मतराऽनयोः ।
प्राणापानौ उभौ एते स्पन्दशक्ती सदागती ॥ ४८ ॥

ऊर्ध्वगस्तु स्थितः प्राणोऽपानः पुनः अवाक् स्थितः ।
बाह्योन्मुखत्वं प्राणानां यद्वदम्बुजकोटरात् ॥ ४९ ॥

स्वरसेनास्तयत्नानां तं धीराः रेचकं विदुः ।
द्वादशाङ्गुलपर्यन्तं बाह्यं आक्रमतां ततः ॥ ५० ॥

प्राणानां अङ्गसंस्पर्शो यः स पूरक उच्यते ।
बाह्यात् परापतत्यन्तरपाने यत्नवर्जितः ॥ ५१ ॥

योऽयं प्रपूरणस्पर्शो विदुः तमपि पूरकम् ।
अपानेऽस्तं गते प्राणः यावत् नाभ्युदितो हृदि ॥ ५२ ॥

तावत् सा कुम्भकावस्था योगिभिः याऽनुभूयते ।
रेचकः पूरकश्चैव कुम्भकश्च त्रिधा स्थिताः ॥ ५३ ॥

बाह्याश्चाभ्यन्तराश्चेति तत्तल्लक्षणलक्षिताः ।
5　चिरजीवितकारणम् ।
अव्यग्रं अस्मिन् व्यापारे बाह्यं परिहरन् मनः ॥ ५४ ॥

दिनैः कतिपयैरेव परं आप्नोति केवलम् ।
एषा हि चित्तविश्रान्तिः मया प्राणसमाधिना ॥ ५५ ॥

क्रमेणानेन संप्राप्ता स्वयं आत्मनि निर्मले ।
न भूतं न भविष्यच्च चिन्तयामि कदाचन ॥ ५६ ॥

दृष्टिमालम्ब्य तिष्ठामि वर्तमानां इहात्मना ।
न तुष्यति शुभप्राप्तौ नाशुभेष्वपि खिद्यते ॥ ५७ ॥

मनो मम समं नित्यं तेन जीवाम्यनामयः ।
अयं बन्धुः परश्चायं ममायं अयमन्यथा ॥ ५८ ॥

इति ब्रह्मन् न जानामि तेनास्मि चिरजीवितः ।
आशापाशविनुन्नायाः चित्तवृत्तेः समाहितः ॥ ५९ ॥

संस्पर्शं न ददाम्यन्तः तेन जीवाम्यनामयः ।
एतत्ते कथितं ब्रह्मन् यथाऽस्मि चिरजीवितः" ॥ ६० ॥

"अहो प्रोक्तः तवोदन्तः परं विस्मयकारणात्" ।
एवमुक्त्वा तमामन्त्र्य मया भूयो दिवं गतम् ॥ ६१ ॥

याते कृतयुगस्यादौ पुनः तेनास्मि संगतः ।
मध्ये त्रेतायुगस्यास्य जातः त्वं रिपुसूदन ॥ ६२ ॥

पुनरद्याष्टमे वर्षे तत्रैवोपरि भूभृतः ।
मिलितोऽभूत् भुशुण्डो मे तथैवाजररूपवान् ॥ ६३ ॥

इदं ते कथितं चित्रं भुशुण्डोदन्तमुत्तमम् ।
श्रुत्वा विचार्य चैवान्तः यत् युक्तं तत् समाचर ॥ ६४ ॥

इति श्रीवासिष्ठसंग्रहे भुशुण्डोपाख्यानं नाम
एकविंशः सर्गः ॥

---

॥ द्वाविंशः सर्गः ॥

—※—

## ॥ देवतार्चनविधानम् ॥

### 1 विधानप्रश्नः ।

वसिष्ठ उवाच —

आभासमात्रमेवेदं इत्थं संप्रति भासते ।
अयंनामाऽहमित्यन्तः असदेव शरीरकम् ॥ १ ॥

सुखतल्पगतो येन स्वप्नदेहेन दिक्तटान् ।
परिभ्रमसि हे राम स देहः ते क्व संस्थितः ॥ २ ॥

जागरायां मनोराज्ये येन स्वर्गपुरान्तरम् ।
परिभ्रमसि मेरुं वा स देहः ते क्व संस्थितः ॥ ३ ॥

दीर्घस्वप्नं इमं विद्धि दीर्घं वा चित्तविभ्रमम् ।
दीर्घं वाऽपि मनोराज्यं संसारं रघुनन्दन ॥ ४ ॥

परं पौरुषमास्थाय बलं प्रज्ञां च युक्तितः ।
नाभिं संसारचक्रस्य चित्तमेव निरोधयेत् ॥ ५ ॥

प्रज्ञासौजन्ययुक्तेन शास्त्रसंवलितेन च ।
पौरुषेण न यत् प्राप्तं न तत् क्वचन लभ्यते ॥ ६ ॥

चित्तयक्षदृढाक्रान्तं न शास्त्राणि न बान्धवाः ।
शक्नुवन्ति परित्रातुं गुरवो न च मानवम् ॥ ७ ॥

संशान्तचित्तवेतालं गुरुशास्त्रार्थबान्धवाः ।
शक्नुवन्ति समुद्धर्तुं स्वल्पपङ्कात् मृगं यथा ॥ ८ ॥

अत्रेमां अपरां दृष्टिं महामोहविनाशिनीम् ।
शृणु या कथिता पूर्वं मह्यं अर्धेन्दुमौलिना ॥ ९ ॥

कदाचित् जान्हवीतीरे स्थितोऽहं पूजयन् शिवम् ।
तदा श्रावणपक्षस्य बहुलस्याष्टमे दिने ॥ १० ॥

अपश्यं कानने तेजः चन्द्रबिम्बगणोपमम् ।
यावत् पश्यामि तं देशं प्राप्तः चन्द्रकलाधरः ॥ ११ ॥

गौरीकरार्पितकरो नन्दिप्रोत्सारिताग्रगः ।
अर्घ्यं पुष्पं तथा पाद्यं अभ्युपेत्यार्पितं मया ॥ १२ ॥

नमस्कारैः तथा स्तोत्रैः देवीयुतशिवोऽर्चितः ।
पूजान्ते मां उवाचेदं अतिशीतलया गिरा ॥ १३ ॥

"कच्चित् तपस्ते निर्विघ्नं किं प्राप्यं प्राप्तवानसि" ।
इत्युक्तेन मया प्रोक्तं "त्वदनुस्मरणे सति ॥ १४ ॥

कुतो विघ्नः न दुष्प्रापं भुवि किंचन विद्यते ।
अपवर्गपुरद्वारं त्वदनुस्मरणं विभो ॥ १५ ॥

किं तु पृच्छामि देवेश कंचित संदेहनिर्णयम् ।
सर्वपापक्षयकरं सर्वकल्याणवर्धनम् ॥ १६ ॥

देवार्चनविधानं तत् कीदृशं भवति प्रभो" ।

2 आत्मैव परमो देवः ।

महेश्वर उवाच —

न देवः पुण्डरीकाक्षो न च देवः त्रिलोचनः ॥ १७ ॥

न देवो देहरूपी हि न देवः चित्तरूपधृक् ।
अकृत्रिमं अनाद्यन्तं देवनं देव उच्यते ॥ १८ ॥

अज्ञातदेवतत्त्वानां आकाराद्यर्चनं कृतम् ।
योजनाध्वन्यशक्तस्य क्रोशाध्वा परिकल्प्यते ॥ १९ ॥

शमबोधादिभिः पुष्पैः देव आत्मा यदर्च्यते ।
तत्तु देवार्चनं विद्धि नाकारार्चनमर्चनम् ॥ २० ॥

शमबोधाद्यभावे हि पुष्पाद्यैरर्चनं स्मृतम् ।
संवित् सर्वकलातीता सत्तासामान्यरूपिणी ॥ २१ ॥

महासत्ताऽऽत्मतां प्राप्ता देवशब्देन कथ्यते ।
देशकालादिशक्तीनां उल्लासैः वलिता क्रमात् ॥ २२ ॥

जीवो भूत्वा भवत्याशु बुद्धिः पश्चात् अहं ततः ।
मनस्त्वं समुपायाता संसारं अवलम्बते ॥ २३ ॥

इयं अस्मीति भावेन देहस्था दुःखमश्नुते ।
पुष्टं संकल्पमात्रेण यदिदं दुःखमागतम् ॥ २४ ॥

तत् असंकल्पमात्रेण क्षीयते नात्र संशयः ।
स्वसंकल्पनकालुष्यं निवार्य चात्मनाऽऽत्मनः २५ ॥

परं प्रसादमासाद्य परमानन्दवान् भव ।
सर्वशक्तिमयो ह्यात्मा सर्वं आसादयत्यलम् ॥ २६ ॥

एष देवः परश्चैषः पूज्य एष सदा सताम् ।

3 पूजाक्रमः ।

पूजनं ध्यानमेवान्तः नान्यत् अस्त्यस्य पूजनम् ॥ २७ ॥

तस्मात् त्रिभुवनाधारं नित्यं ध्यानेन पूजयेत् ।
चिद्रूपं सूर्यलक्षाभं समस्ताभासभासनम् ॥ २८ ॥

इच्छादिशक्तयः तस्य चिन्तनीयाः शरीरगाः ।
अनन्तः स पराधारः सत्तामात्रैकविग्रहः ॥ २९ ॥

विवर्तितजगज्जालः कालोऽस्य द्वारपालकः ।
सर्वत्रेक्षणशक्त्याढ्यं सर्वतोघ्राणशक्तिकम् ॥ ३० ॥

सर्वतः स्पर्शसंयुक्तं सर्वतो रसनान्वितम् ।
सर्वत्र श्रवणाकीर्णं सर्वत्र मननान्वितम् ॥ ३१ ॥

सर्वतो मननातीतं सर्वत्र परमं शिवम् ।
इति संचिन्त्य देवेशं अर्चयेत् विधिवत् ततः ॥ ३२ ॥

स्वसंविदात्मा देवोऽयं नोपहारेण पूज्यते ।
नित्यं अक्लेशलभ्येन बोधेन स्वेन पूज्यते ॥ ३३ ॥

बाह्यसंपूजनं प्रोक्तं एतत् उत्तममात्मनः ।
इदानीं संप्रवक्ष्येऽहं अन्तः पूजनमात्मनः ॥ ३४ ॥

नित्यमेव शरीरस्थं इमं ध्यायेत् परं शिवम् ।
स्वदेहे संविदाभासो देवोऽयं इति भावयेत् ॥ ३५ ॥

नष्टं नष्टं उपेक्षेत प्राप्तं प्राप्तं उपाहरेत् ।
निर्विकारतयैतद्धि परमार्चनमात्मनः ॥ ३६ ॥

सर्वं ब्रह्मेति निश्चित्य नित्यात्मार्चाव्रतं चरेत् ।
आत्मार्चनविधानेऽस्मिन् प्रोक्ता द्रव्यश्रियस्तु याः ॥

एकेनैव शमेनैताः रसेन परिभाविताः ।
शास्त्रार्थैः बुध्यते नात्मा गुरोः वचनतो न च ॥ ३८ ॥

बुध्यते स्वयमेवैषः स्वबोधवशतः स्वतः ।
गुरूपदेशशास्त्रार्थैः विना चात्मा न बुध्यते ॥ ३९ ॥

एतत्संयोगसत्त्वैव स्वात्मज्ञानप्रकाशिनी ।
एवं देवार्चनं नित्यं यः करोति समाहितः ॥ ४० ॥

यत्रास्मदादयो भृत्या तत् स याति परं पदम् ।
इत्युक्त्वा नीलकण्ठोऽसौ अन्तर्धानं क्षणात् गतः ॥ ४१ ॥

ततःप्रभृति तेनैव क्रमेणार्चनमात्मनः ।
अद्य यावत् गतव्यग्रः कुर्वन् अहं अत्रस्थितः ॥ ४२ ॥

अनेनार्चाविधानेन मयेमे राम वासराः ।
अखिन्नेनातिवाह्यन्ते व्यवहारपरा अपि ॥ ४३ ॥

अनयैव च सद्दृष्ट्या सङ्गमुक्तेन चेतसा ।
संसारविरलारण्ये विहरास्मिन् न खिद्यसे ॥ ४४ ॥

इति श्रीवासिष्ठसंग्रहे देवार्चनविधानं नाम
द्वाविंशः सर्गः ॥

## ॥ त्रयोविंशः सर्गः ॥

## ॥ चिच्छक्तिप्रभावः ॥

### 1 बिल्वफलाख्यानम् ।

वसिष्ठ उवाच—

वासनारहितैरन्तः इन्द्रियैराहर क्रियाः ।
केवलैरिन्द्रियैः सार्धं वर्तमानार्थवर्तिना ॥ १ ॥

असंगमेन मनसा यत्करोषि न तत्कृतम् ।
यथा प्राप्तिक्षणे वस्तु प्रथमं तुष्टये तथा ॥ २ ॥

न प्राप्त्येकक्षणात् ऊर्ध्वं इति को नानुभूतवान् ।
वाञ्छाकाले यथा वस्तु तुष्टये नान्यदा तथा ॥ ३ ॥

तस्मात् क्षणसुखे सक्तिं बालो बध्नाति नेतरः ।
वाञ्छाक्षणे तु या तुष्टिः तत्र वाञ्छैव कारणम् ॥ ४ ॥

तुष्टिस्त्वतुष्टिपर्यन्ता तस्मात् वाञ्छां परित्यज ।
आशा यातु निराशत्वं अभावं यातु भावनम् ॥ ५ ॥

अमनस्त्वं मनो यातु तवासङ्गेन जीवतः ।
वासनाप्राणसंरोधात् अनिमेषं मनः कुरु ॥ ६ ॥

यत्र नाभ्युदितं चित्तं तद्वै सुखं अनुत्तमम्।
अत्रात्मावबोधाय राम रम्यां कथां शृणु ॥ ७ ॥

युगैरप्यजरद्रूपं अस्ति बिल्वफलं महत्।
महाकल्पान्तवात्यायाः अपि वेगैः अचालितम् ॥ ८ ॥

वैपुल्येनापरिच्छेद्यं मूलं आद्यं जगत्स्थितेः।
तस्य बिल्वफलस्योच्चैः ब्रह्माण्डानि समीपतः ॥ ९ ॥

समस्तफलसारस्य फलस्यास्य महाकृतेः।
अन्तःस्थितत्वमायाति संविच्छक्तिचमत्कृतिः ॥ १० ॥

इदं व्योम महानन्तं इयं कालमयी कला।
इयं नियतिरुद्युक्ता क्रियेयं स्पन्दरूपिणी ॥ ११ ॥

ब्रह्माण्डमण्डपं चेदं इमा आशाः क्रमो ह्ययम्।

श्रीराम उवाच —

भगवन् सर्वसारज्ञ त्वयैषा बिल्वरूपिणी ॥ १२ ॥

महाचिद्घनसत्तेह कथितेति मतिः मम।

2 महाशिलाख्यानम्।

वसिष्ठ उवाच —

अन्यथा वर्ण्यमानां च कथां एतां मया शृणु ॥ १३ ॥

स्निग्धा स्पष्टा मृदुस्पर्शा महाविस्तारशालिनी।
निबिडा नित्यनीरन्ध्रा क्वचिदस्ति महाशिला ॥ १४ ॥

तस्यां अन्तः प्रफुल्लानि पद्मानि सुबहूनि हि ।
अन्योन्यप्रोतपत्राणि गूढानि प्रकटानि च ॥ १५ ॥

ऊर्ध्वमूलान्यधोमूलान्यमूलानीतराणि च ।
चिच्छिलैषा मयोक्ता ते यस्यां अन्तः जगत्स्थितिः ॥

घनत्वैक्यात्मकत्वादिवशात् एषा शिलेव चित् ।
तथा चित् विश्वगर्भाऽपि न मुञ्चत्येकपिण्डताम् ॥ १७ ॥

तथाऽनन्तविकाराढ्या चितौ ब्रह्माण्डमण्डली ।

3 अर्जुनोपाख्यानम् ।

श्रीराम उवाच —

पुर्यष्टकस्वरूपं मे भगवन् कीदृशं वद ॥ १८ ॥

वसिष्ठ उवाच —

अनाद्यन्तं जगद्बीजं यत् ब्रह्मास्ति निरामयम् ।
तदेव कलनायुक्तं अत्र जीव इति स्मृतः ॥ १९ ॥

स जीवः खलु देहेऽस्मिन् चिनोति स्पन्दते स्फुटम् ।
अहंभावात् अहङ्कारो मननात् मन उच्यते ॥ २० ॥

बोधनिश्चयतो बुद्धिः इन्द्रदृष्टेः तथेन्द्रियम् ।
देहभावनया देहो घटभावनया घटः ॥ २१ ॥

एष एव स्वभावात्मा जनैः पुर्यष्टकं स्मृतः ।
ज्ञत्वकर्तृत्वभोक्तृत्वसाक्षित्वाद्यभिपातिनी ॥ २२ ॥

या संवित् जीव इत्युक्ता तद्धि पुर्यष्टकं विदुः ।
पुर्यष्टकवशेनैव स्वप्नात् स्वप्नान्तरं यथा ॥ २३ ॥

असत्यमेव पश्यन्ति जनाः तद्वत् इदं जगत् ।
अर्जुनवद्धि निर्दुःखं सुखं क्षेपय जीवितम् ॥ २४ ॥

यमोऽकरोत् तपः पूर्वं दमनात् पापशङ्कया ।
महीयं तेन नीरन्ध्रा भूतैः मर्त्यैः अमृत्युभिः ॥ २५ ॥

भारेण परिभूताङ्गी हरिं शरणमेष्यति ।
हरिः देहद्वयेनाथ भूमौ अवतरिष्यति ॥ २६ ॥

वासुदेवोऽर्जुनश्चेति तदा युद्धे ह्युपस्थिते ।
अर्जुनः स्वजनान् शत्रून् दृष्ट्वा गच्छेत् विषण्णताम् ॥

बोधयिष्यति तं देवः प्राप्तकार्यैकसिद्धये ।
"आत्मा ह्यनादिमध्यान्तः हते देहे न हन्यते ॥२८॥

शाश्वतोऽयं अजो नित्यो जन्ममृत्युविवर्जितः ।
योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा फलानि च ॥ २९ ॥

संन्यस्तसर्वसंकल्पः समः शान्तमनाः भव ।
त्यागः संकल्पजालानां असङ्ग इति कथ्यते ॥ ३० ॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवं आत्मानं मत्परायणः ॥ ३१ ॥

सामान्यं परमं चेति द्वे रूपे विद्धि मेऽनघ ।
पाण्यादियुक्तं सामान्यं परं सूक्ष्मं अनामयम् ॥ ३२ ॥

यावत् अप्रतिबुद्धः त्वं तावत् सामान्यको भव ।
तत्क्रमात् संप्रबुद्धः त्वं ततो ज्ञास्यसि तत् परम् ॥ ३३ ॥

अज्ञानात् आत्मनो नूनं सत्तां आयाति वासना ।
आत्मज्ञाने महाबोधात् विलयं याति वासना" ॥ ३४ ॥

एवं संबोधितः सम्यक् त्यक्तशोको भविष्यति ।

4 भिक्षूपाख्यानम् ।

अपरं कस्यचित् भिक्षोः इतिहासं इमं शृणु ॥ ३५ ॥

आसीत् कश्चित् महाभिक्षुः समाध्यभ्यासतत्परः ।
यत् चिन्तयति तच्चित्तं तद्रूपं प्रतिपद्यते ॥ ३६ ॥

कदाचित् एष लीलार्थं अभूत् जीवटनामकः ।
जीवटो विहरन् स्वप्ने कश्चित् विप्रो बभूव ह ॥ ३७ ॥

विप्रः स्वप्ने च सामन्तः सोऽपि स्वप्नेऽभवत् नृपः ।
एवं स क्रमशः स्वप्ने सुरस्त्री च ततो मृगी ॥ ३८ ॥

भूत्वा ततो लता भूत्वा भ्रमरत्वं उपागतः ।
भ्रमरो वारणालोकात् वारणत्वं अवाप्य सः ॥ ३९ ॥

गण्डस्थभ्रमराध्यासात् गजो भूयोऽप्यभूत् अलिः ।
पार्श्वस्थहंससंविच्या हंसो भूत्वा पुनः लुठन् ॥ ४० ॥

ब्रह्मसारसतां प्राप्तः सोऽपश्यत् रुद्रमेकदा ।
तदा बुद्धिः अभूत् तस्य रुद्रोऽहं इति निश्चिता ॥ ४१ ॥

रुद्रस्त्वनुत्तमज्ञानविलासिन्या धिया ततः ।
स्वस्याशेषं उदन्तं तं दृष्ट्वा विस्मयमागतः ॥ ४२ ॥

"अहो विचित्रं मायेयं बत विश्वविमोहिनी ।
अहं योनिशते भ्रान्त्वा रुद्रत्वं अधुना गतः ॥ ४३ ॥

तांस्तान् सर्वान् स्वसंसारान् उत्थाप्यालोकयाम्यहम्" ।
इति संचिन्त्य रुद्रोऽसौ यत्र भिक्षुः ततो गतः ॥ ४४ ॥

सुप्तं तं बोधयित्वाऽथ चेतसा चेतनेन च ।
योजयामास, सस्मार भिक्षुरप्यात्मनो भ्रमम् ॥ ४५ ॥

रुद्रं आत्मानमालोक्य जीवटादिमयं तथा ।
उभौ तौ जग्मतुः शीघ्रं जीवटस्य निवेशनम् ॥ ४६ ॥

तं प्रबोध्य नियोज्याशु चेतसा चेतनेन च ।
बोधयन्तः त्रयो जग्मुः विप्रसामन्तकादिकान् ॥ ४७ ॥

रुद्रांशाः ते ततः सर्वे दिव्यज्ञानाः चकाशिरे ।
प्रययुः स्वास्पदं तेऽपि रुद्रेणाथ नियोजिताः ॥ ४८ ॥

स्वकलत्रैः समं देहं क्षपयित्वाऽथ कालतः ।
रुद्रेण सह ते सर्वे देहान्ते रुद्रमाप्नुवन् ॥ ४९ ॥

सर्वं अस्ति चितः कोशे यत् यथाऽऽलोकयत्यसौ ।
सर्वं ह्यभिमतं कार्यं एकनिष्ठस्य सिध्यति ॥ ५० ॥

तस्मात् एकार्थनिष्ठत्वात् भिक्षुजीवेन रुद्रताम् ।
प्राप्य रुद्रात्मना लब्धा संकल्पार्थस्य सत्यता ॥ ५१ ॥

भिक्षुसंकल्पजीवाः ते प्रत्येकं सत्यतां गताः ।
रुद्रविज्ञानवशतः विविशुः तत् परं पदम् ॥ ५२ ॥

सहस्रधा भवेत् एकः संकल्पाद्धि यथा हरिः ।
अंशावतारलीलाभिः कुरुते जागतीं स्थितिम् ॥ ५३ ॥

इति श्रीवासिष्ठसंग्रहे चिच्छक्तिप्रभावो नाम
त्रयोविंशः सर्गः ॥

—*—

## ॥ चतुर्विंशः सर्गः ॥

---

## ॥ भगीरथोपाख्यानम् ॥

### । सौषुप्तमौनम् ।

वसिष्ठ उवाच—

सौषुप्तमौनवान् भूत्वा त्यज चित्तविलासितम् ।

श्रीराम उवाच—

सौषुप्तमौनमित्येतत् ब्रह्मन् ब्रूहि किं उच्यते ॥ १ ॥

वसिष्ठ उवाच—

वाङ्मौनं वचसां रोधो, बलात् इन्द्रियनिग्रहः ।
अक्षमौनं, परित्यागं चेष्टानां काष्ठसंज्ञकम् ॥ २ ॥

प्रस्फुरच्चित्तकलनं एतत् मौनत्रयं भवेत् ।
अविभागं अनभ्यासं अनाद्यन्तं यत् आस्थितम् ॥ ३ ॥

ध्यायतोऽध्यायतश्चैव सौषुप्तं मौनमुच्यते ।
यथाभूतं इदं बुद्ध्वा जगत् नानात्वविभ्रमम् ॥ ४ ॥

यथास्थितं असंदेहं सौषुप्तं मौनमुच्यते ।
सुषुप्तमौनं योगीशैः द्विविधैः प्राप्यते खलु ॥ ५ ॥

सम्यग्ज्ञानावबोधेन नित्यमेकसमाधिना ।
संख्ययैवावबुद्धा ये ते सांख्ययोगिनः स्मृताः ॥ ६ ॥

प्राणाद्यनिलसंशान्तौ युक्त्या ये पदमागताः ।
अनामयं अनाद्यन्तं ते स्मृताः योगयोगिनः ॥ ७ ॥

यत् सांख्यैः प्राप्यते स्थानं परं योगैः तदेव हि ।
एकतत्त्वघनाभ्यासः प्राणानां विलयः तथा ॥ ८ ॥

मनोविनिग्रहश्चेति मोक्षशब्दार्थसंग्रहः ।
एकस्मिन्नपि संसिद्धे ते सिद्ध्यन्ति परस्परम् ॥ ९ ॥

अविनाभाविनी नित्यं जन्तूनां प्राणचेतसी ।
कुसुमामोदवत् मिश्रे तिलतैल इव स्थिते ॥ १० ॥

आधाराधेयवच्चैव एकाभावे विनश्यतः ।
कुरुतश्च स्वनाशेन कार्यं मोक्षाख्यमुत्तमम् ॥ ११ ॥

2 वेतालोपाख्यानम् ।

शुभान् आकर्णय प्रश्नान् प्रसङ्गात् स्मृतिमागतान् ।
आसीत् विन्ध्यमहाटव्यां वेतालो विपुलाकृतिः ॥ १२ ॥

निर्निमित्तं निरागस्कं पुरोऽप्यभ्यागतं नरम् ।
क्षुधितोऽपि न हन्त्येषः सन्तो हि न्यायदर्शकाः ॥ १३ ॥

निशायां एकदा प्राप्तं भूपालं प्रोक्तवानसौ ।
"मया लब्धोऽसि राजन् त्वं भव भोजनमद्य मे ॥ १४ ॥

राजोवाच च "निर्यासि मां चेत् अत्सि बलात् इह ।
तत् ते सहस्रधा मूर्धा स्फुटिष्यति न संशयः" ॥ १५ ॥

वेतालश्च ततः प्राह " न्यायोऽयं हि मयोच्यते ।
राजाऽसि सकलाशाश्च पूरणीयाः त्वयाऽर्थिनाम् ॥ १६ ॥

प्रश्नानां उत्तरं दत्त्वा प्रपूरय ममार्थनाम् ।
कस्य सूर्यस्य रश्मीनां ब्रह्माण्डानि कणाणवः ॥ १७ ॥

स्वप्नात् स्वप्नान्तरं गच्छन् शतशोऽथ सहस्रशः ।
त्यजन् न त्यजति स्वच्छं कः स्वरूपं प्रभास्वरम् ॥१८॥

ब्रह्माण्डाकाशभूतौघं सूर्यमण्डलमेरवः ।
अपरित्यजतोऽणुत्वं कस्याणोः परमाणवः ॥ १९ ॥

कस्यानवयवस्यैव ह्यन्तर्मज्जा जगत्त्रयी" ।
इत्युक्तवति वेताले विहस्योवाच भूपतिः ॥ २० ॥

"त्वया प्रोक्तो हि चित्सूर्यः विज्ञानात्माऽतिभास्वरः ।
सर्वाणि भुवनानीह तस्यैव त्रसरेणवः ॥ २१ ॥

जगदाख्ये महास्तम्भे स्वप्नात् स्वप्नान्तरं व्रजन् ।
शान्तं त्यजति नो रूपं जीवभावं गतेऽपि च ॥ २२ ॥

सूक्ष्मत्वात् अप्यलभ्यत्वात् परमात्माऽणुरुच्यते ।
पुरतस्तस्य मेर्वादि परमाणुवदेव हि ॥ २३ ॥

सर्वावयवरूपोऽपि निरस्तावयवः पुमान् ।
अस्य विज्ञप्तिमात्रस्य मज्जामात्रं जगत्त्रयम्" ॥ २४ ॥

इति राजवचः श्रुत्वा वेतालः शान्तिमाययौ ।
बभूव च सदा ध्यानी विस्मृत्य सकलां क्षुधाम् ॥ २५ ॥

3 ज्ञानसाधनानि ।

संहृत्य सर्वतः चित्तं सर्वत्र समदर्शिनः ।
स्थिरबुद्धेः अमूढस्य यथाप्राप्तानुवर्तिनः ॥ २६ ॥

राज्ञो भगीरथस्येव दुःसाध्यमपि सिध्यति ।
आसीत् भगीरथो राम राजा परमधार्मिकः ॥ २७ ॥

यौवने वर्तमानोऽपि लोकयात्रां विचारयन् ।
अत्युद्विग्नमनाः भूत्वा सोऽपृच्छत् त्रितलं गुरुम् ॥

"जरामरणमोहादिरूपाणां भयकारिणाम् ।
भगवन् सर्वदुःखानां कथमन्तः प्रजायते ॥ २९ ॥

चिन्मात्रं सर्वगं शान्तं अस्ति निर्मलं अच्युतम् ।
देहादि नेतरत् किंचित् इति वेद्मि मुनीश्वर ॥ ३० ॥

किंत्वत्र प्रतिपत्तिः मे स्फुटतां एति न प्रभो ।
एतावन्मात्रसंवित्तिः स्यां अहं सर्वदा कथम् ॥ ३१ ॥

त्रितुल उवाच —

ज्ञानेन ज्ञेयनिष्ठत्वं एति चेतो हृदम्बरे ।
ततः सर्वात्मको भूत्वा भूयो गच्छेत् न जीवताम् ॥

असक्तिः अनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वं इष्टानिष्टोपपत्तिषु ॥ ३३ ॥

आत्मनोऽनन्ययोगेन तद्भावनं अनारतम् ।
विविक्तदेशसेवित्वं अरतिः जनसंसदि ॥ ३४ ॥

अध्यात्मज्ञाननिष्ठत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतत् ज्ञानं इति प्रोक्तं अज्ञानं स्यात् इतोऽन्यथा ॥ ३५ ॥

अहंभावोपशान्तौ तत् राजन् ज्ञानं अवाप्यते ।

भगीरथ उवाच —

शरीरेऽस्मिन् अहंभावः चिरस्थः त्यज्यते कथम् ॥ ३६ ॥

त्रितुल उवाच —

पौरुषेण प्रयत्नेन त्यक्त्वा विषयभावनाम् ।
सत्तां आश्रित्य संपूर्णां अहङ्कारो लयं व्रजेत् ॥ ३७ ॥

सर्वैषणाः परित्यज्य शान्ताशेषविशेषणः ।
अकिंचनत्वं आयातः स शान्ताहंकृतिः भवेत् ॥ ३८ ॥

4 चित्तविश्रान्तिः ।

एवं श्रुत्वा गुरोः वक्त्रात् सर्वमेव परित्यजन् ।
राज्यं स्वं अरये दत्वा खिन्नप्रकृतिपौरकम् ॥ ३९ ॥

अघोवासोवशेषोऽसौ निर्जगाम स्वमण्डलात् ।
यत्र न ज्ञायते ह्येषः तत्रैवोवास धैर्यवान् ॥ ४० ॥

ततोऽल्पेनैव कालेन प्रशान्तसकलैषणः ।
परमेण शमेनासौ प्राप विश्रान्तिमात्मनि ॥ ४१ ॥

एकदा स भ्रमन् भूमौ स्वस्यैव पुरमाययौ ।
प्रभो राज्यं गृहाणेति प्रार्थितोऽप्यरिणा तदा ॥ ४२ ॥

नाददे तृणमप्येषः ऋते भिक्षां भगीरथः ।
आत्मारामं कदाचिच्च स प्राप त्रितुलं गुरुम् ॥ ४३ ॥

किंचित्कालं उवासासौ तेन सार्धं वनादिके ।
समतां उपयातौ तौ गच्छन्तौ तु वनात् वनम् ॥ ४४ ॥

न ननन्दतुरानन्दं न दुःखं न च मध्यमम् ।
सिद्धैः अर्पितमैश्वर्यं मेनाते जर्जरं तृणम् ॥ ४५ ॥

अथैकदा मृतो भूपः कस्मिंश्चित् मण्डलान्तरे ।
तत्प्रजास्तु परिज्ञाय मुनिरूपं भगीरथम् ॥ ४६ ॥

तं आसाद्य समानीय मोदात् चक्रुः महीपतिम् ।
एवं तत्र स्थिते राज्ञि प्राक् प्रकृतय आययुः ॥ ४७ ॥

आभिश्च प्रार्थितो राजा पुनः तासां अभूत् नृपः ।
समः शान्तमनाः मौनी वीतरागो विमत्सरः ॥ ४८ ॥

अथ वर्षसहस्राणि तपः तप्त्वा सुदारुणम् ।
पितामहान् समुद्धर्तुं भुवि गङ्गां अयोजयत् ॥ ४९ ॥

इति श्रीवासिष्ठसंग्रहे भगीरथोपाख्यानं नाम
चतुर्विंशः सर्गः ॥

---

॥ पञ्चविंशः सर्गः ॥

—*—

## ॥ चूडालाप्रभावः ॥

### 1 ज्ञानोदयः ।

वसिष्ठ उवाच —

आसीत् शिखिध्वजो राजा मालवानां पुरे पुरा ।
चूडालाख्या च तत्पत्नी सुराष्ट्राधिपतेः सुता ॥ १ ॥

अवर्धत तयोः प्रीतिः अन्योन्यार्पितचेतसोः ।
एवं बहुषु वर्षेषु यातेषु च क्रमात् तयोः ॥ २ ॥

शनैः गलति तारुण्ये भिन्नकुम्भात् इवाम्भसि ।
आत्मनो ज्ञानमेव स्यात् संसारव्याधिभेषजम् ॥ ३ ॥

इति निश्चित्य तौ आस्तां तन्निष्ठौ तत्परायणौ ।
अथ साऽदितं राम शास्त्रार्थमनने रता ॥ ४ ॥

इत्थं विचारयामास स्वं आत्मानं अहर्निशम् ।
"कस्मायं आगतो मोहः कथं अभ्युदितः क्व वा ॥ ५ ॥

देहस्तावत् जडो मूढो नाहमित्येव निश्चयः ।
कर्मेन्द्रियगणश्चासौ बुद्धीन्द्रियगणः तथा ॥ ६ ॥

जड एव भवेत् नूनं प्रेर्यते मनसा यतः ।
मनोऽप्येवं जडं यस्मात् प्रेर्यते बुद्धिनिश्चयैः ॥ ७ ॥

बुद्धिश्चापि जडा यस्मात् अहङ्कारेण चाल्यते ।
अहङ्कारो जडो नूनं जीवेन जन्यते यतः ॥ ८ ॥

जीवश्च कलनाकारः केनाप्यन्येन जीवति ।
अहो ज्ञातं अयं जीवः चिद्रूपेणैव जीवति ॥ ९ ॥

इदानीं पुनरीक्षेऽहं केनैषा चित् प्रचेत्यते ।
अहो नु चिरकालेन ज्ञातं ज्ञेयं अनामयम् ॥ १० ॥

एते हि चिद्विलासान्ताः मनोबुद्धीन्द्रियादयः ।
असन्तः सर्व एवाहो अवधानं विनोत्थिताः ॥ ११ ॥

महाचित् एकैवास्तीह निरहङ्काररूपिणी ।
सकृत् विभाता विमला नित्योदयवती सदा ॥ १२ ॥

सा ब्रह्मपरमात्मादिनामभिः परिगीयते" ।
दिनानुदिनं इत्येषा स्वात्मारामतया तथा ॥ १३ ॥

परमात्ममहालाभपरिपूर्णान्तरात्मना ।
स्वविवेकघनाभ्यासवशात् आत्मोदयेन सा ॥ १४ ॥

शुशुभे शोभना तत्र चूडालाऽपूर्वशोभया ।
तां आलोक्य तदा राजा विस्मितो व्याजहार ह ॥ १५ ॥

"भूयो यौवनयुक्तेव राजसे नितरां प्रिये ।
गम्भीरं च प्रशान्तं च चेतः पश्यामि ते प्रिये" ॥

चूडालोवाच —

इदं सर्वं परित्यज्य सर्वं अन्यत् मयाऽऽश्रितम् ।
यत् तत् सत्यं असत्यं च तेनास्मि श्रीमती स्थिता ॥

न हृष्यामि न कुप्यामि तेनाहं श्रीमती स्थिता ।
एकैवाकाशसंकाशे केवले हृदये रमे ॥ १८ ॥

सदाऽऽत्मन्येव तुष्यामि तेनाहं श्रीमती स्थिता ।
अबुद्ध्वा तद्गिरां अर्थं विहस्योत्थाय भूपतिः ॥ १९ ॥

असंबद्धप्रलापोऽयं इति निश्चितवान् तदा ।
"कष्टं नात्मनि विश्रान्तो मद्वचोऽयं न बुद्धवान्" ॥

इति खिन्ना च चूडाला स्वव्यापारपराऽभवत् ।

2 कुण्डलिनी ।

एकदा नित्यतृप्तायाः निरिच्छायाः अपि स्वयम् ॥

चूडालाया बभूवेच्छा ह्याकाशगमनादिषु ।
तदर्थं सर्वभोगान् सा संत्यज्य निर्जने स्थले ॥ २२ ॥

ऊर्ध्वगप्राणपवनं चिराभ्यासं चकार ह ।
चूडालायाः कथायां च प्रसङ्गापतितां इमाम् ॥ २३ ॥

प्राणादिपवनाभ्यासक्रियां सिद्धिफलां शृणु ।
भोजनासनशुद्धया च साधु शास्त्रार्थभावनात् ॥ २४ ॥

भोगत्यागाच्च कोपादित्यागात् सज्जनसेवनात् ।
प्राणायामघनाभ्यासात् भृशं यान्ति विधेयताम् ॥ २५ ॥

प्राणाः प्रभुत्वात् तज्ज्ञस्य पुंसो भृत्या इवाखिलाः ।
राज्यादिमोक्षपर्यन्ताः समस्ता एव संपदः ॥ २६ ॥

देहानिलविधेयत्वात् साध्याः सर्वस्य राघव ।
कीटादिष्वपि सर्वेषु मर्मस्थानं समाश्रिता ॥ २७ ॥

भोगिवत् मण्डलाकारा सर्वदा स्पन्दरूपिणी ।
पावनी परमा शक्तिः पवमानेन तिष्ठति ॥ २८ ॥

साऽतः कुण्डलिनी प्रोक्ता नाड्यो हृदयकोशगाः ।
अस्यां समस्ताः संबद्धाः सैव प्राणमयी स्मृता ॥ २९ ॥

प्राणापानस्वरूपत्वात् अध ऊर्ध्वं व्रजत्यसौ।

३ आधिव्याधयः।

यद्यन्तः मारुतो रुद्धः व्याधिः जन्तोः न जायते॥

देहदुःखं विदुः व्याधिं आध्याख्यं वासनामयम्।
दुरन्नाभ्यवहारेण दुर्देशाक्रमणेन च॥ ३१॥

दुष्कालव्यवहारेण दुर्जनासङ्गदोषतः।
क्षीणत्वात् वाऽतिपूर्णत्वात नाडीनां रन्ध्रसंततौ॥ ३२॥

प्राणे विधुरतां याते व्याधिः देहे प्रवर्तते।
आधिक्षये चाधिभवाः क्षीयन्ते व्याधयोऽप्यलम्॥ ३३॥

अनाधिजा व्याधयस्तु द्रव्यमन्त्रशुभकर्मैः।
चिकित्सकादिशास्त्रोक्तैः नश्यन्ति त्वं च वेत्सि तत्॥

चित्ते विधुरिते देहः संक्षोभं उपयाति हि।
संक्षोभात् साम्यं उत्सृज्य वहन्ति प्राणवायवः॥ ३५॥

असमे वहति प्राणे नाड्यो यान्ति विसंस्थितिम्।
कुजीर्णत्वं अजीर्णत्वं अतिजीर्णत्वमेव वा॥ ३६॥

दोषायैव प्रयात्यन्नं नाडीप्राणविपर्ययात्।
यान्यन्नानि निरोधेन तिष्ठन्त्यन्तःशरीरके॥ ३७॥

तान्येव व्याधितां यान्ति परिणामस्वभावतः।
एवं आधेः भवेत् व्याधिः आधिनाशाच्च नश्यति॥

यथा विरेकं कुर्वन्ति हरीतक्यः स्वभावतः ।
भावनावशतो मन्त्रैः कर्मणा साधुसेवया ॥ ३९ ॥
मनः प्रयाति नैर्मल्यं आनन्दो वर्धते तदा ।
सत्त्वशुद्ध्या वहन्त्येते क्रमेण प्राणवायवः ॥ ४० ॥
जरयन्ति तथाऽन्नानि व्याधिः तेन विनश्यति ।

4 अणिमादिसिद्धयः ।

कुण्डलिन्यां कथायोगं अधुना प्रकृतं शृणु ॥ ४१ ॥
तां यदा पूरकाभ्यासात् आपूर्य स्थीयते समम् ।
तदैति मैरवं स्थैर्यं कायस्यापीनतां तथा ॥ ४२ ॥
यदा पूरकपूर्णान्तरायतप्राणमारुतम् ।
तदा समस्तमेवेदं उन्प्लावयति देहकम् ॥ ४३ ॥
इत्यभ्यासविलासेन प्राप्यते व्योमगामिता ।
ब्रह्मनाडीप्रवाहेण शक्तिः कुण्डलिनी यदा ॥ ४४ ॥
बहिः ऊर्ध्वं कपाटस्य द्वादशाङ्गुलमूर्धनि ।
रेचकेन प्रयोगेण नाड्यन्तरनिरोधिना ॥ ४५ ॥
मुहूर्तं स्थितिं आप्नोति तदा व्योमगदर्शनम् ।
मुखात् बहिः द्वादशान्ते रेचकाभ्यासतः चिरम् ॥ ४६ ॥
प्राणे च स्थापिते देहं अन्यं च प्रविशत्यसौ ।

श्रीराम उवाच—

सूक्ष्मच्छिद्रादिगत्यर्थं पूरणार्थं च खस्य वा ॥ ४७ ॥

अणुतां स्थूलतां वाऽपि कायोऽयं नीयते कथम् ।

वसिष्ठ उवाच—

एकं चिन्मात्रमस्तीह सूक्ष्मात् सूक्ष्मतरं हि तत् ॥ ४८ ॥

असत्यमेव सङ्कल्पभ्रमेणेदं शरीरकम् ।
एवं हि विदितात्मानो भावयन्ति यथैव यत् ॥ ४९ ॥

तत् तथैवानुपश्यन्ति दृढभावनया तया ।
सत्यभावेन दृष्टोऽयं देहो देहो भवत्यलम् ॥ ५० ॥

दृष्टस्त्वसत्यभावेन व्योमतां याति देहकः ।
अणिमादिपदप्राप्तौ भावना युक्तिरीदृशी ॥ ५१ ॥

सुलभा च भवत्येषा योगसंसिद्धिसंविदाम् ।
एवं बभूव चूडाला घनाभ्याससवती सती ॥ ५२ ॥

5　उपदेशप्रयोजनम् ।

विवेद नैव राजा तु तामेवंगुणशालिनीम् ।
बहुशो बोध्यमानोऽपि तया राजा न बुद्धवान् ॥ ५३ ॥

उपदेशक्रमो राम व्यवस्थामात्रपालनम् ।
ज्ञप्तेस्तु कारणं शुद्धा शिष्यप्रज्ञैव केवलम् ॥ ५४ ॥

श्रीराम उवाच—

एवं स्थिते मुने ब्रूहि कथं एतत् जगत्स्थितौ ।
क्रमो गुरूपदेशाख्यः स्वात्मज्ञानस्य कारणम् ॥ ५५ ॥

वसिष्ठ उवाच—

अत्यन्तकृपणः कश्चित् पतितां विन्ध्यजाङ्गले ।
एकां करोटिकां प्राप्तुं सर्वं तृणतुषादिकम् ॥ ५६ ॥

दिनत्रयं दुधावाथ चिन्तामणिं अविन्दत ।
एवं करोटिकान्वेषात् रत्नं लब्धं अखेदिना ॥ ५७ ॥

तथा श्रुतोपदेशेन स्वात्मज्ञानं अवाप्यते ।
तत्त्वस्यास्य महार्थस्य प्राप्तौ यद्यपि कारणम् ॥ ५८ ॥

न गुरोः कथनं साक्षात् तथाऽपि कारणं क्रमात् ।
चिन्तामणेः हि संप्राप्तौ यथा हेतुः करोटिका ॥ ५९ ॥

इति श्रीवासिष्ठसंग्रहे चूडालाप्रभावो नाम
पञ्चविंशः सर्गः ॥

## ॥ षड्विंशः सर्गः ॥

# ॥ शिखिध्वजतपः ॥

### १　काननवासः ।

वसिष्ठ उवाच—

राजाऽऽत्मज्ञानहीनस्तु दुःखेन पीडितो भृशम् ।
ददौ अतितरां दानं तीर्थयात्रां चकार च ॥ १ ॥

तपः कृच्छ्रादिकं चक्रे न तु लब्धा विशोकता ।
चूडालां एकदा भूपः प्रोचे मधुरया गिरा ॥ २ ॥

"भुक्तं राज्यं चिरं कालं दृष्टा विभवभूमयः ।
अधुनाऽस्मि विरागेण युक्तो गच्छामि काननम् ॥ ३ ॥

राज्यात् अप्यधिकं मन्ये सुखं वननिवासिनाम् ।
अस्मिन् सन्मन्त्रणे तन्वि न विघ्नं कर्तुमर्हसि ॥ ४ ॥

भवत्या पालयन्त्येह राज्ये स्थातव्यं उत्तमे" ।
इत्युक्त्वा दयितां राजा ह्यर्धराले विनिर्गतः ॥ ५ ॥

क्रमात् मन्दरशैलस्य तटस्थं काननं ययौ ।
तत्रैकस्मिन् समे देशे स चकारोटजालयम् ॥ ६ ॥

सर्वं संपादितं तेन योग्यं तापसकर्मणि ।
सन्ध्यापूर्वं जपं प्रातः प्रहरे स तदाऽकरोत् ॥ ७ ॥

पुष्पोच्चयं द्वितीये तु स्नानं देवार्चनं ततः ।
पश्चात् वन्यं फलं किंचित् भुक्त्वा जप्यपरोऽभवत् ॥ ८ ॥

पुरे प्रबुध्य चूडाला भर्त्रा त्यक्ताऽतिखिन्नधीः ।
वातरन्ध्रेण निर्गत्य पतिं दृष्ट्वा न्यवर्तत ॥ ९ ॥

"आस्तां ममाद्य गमनं कालेनातिचिरेण हि ।
मयाऽस्य पार्श्वं गन्तव्यं" इति निश्चित्य सा तदा ॥

"केनचित् कारणेनासौ गतः संप्रति भूपतिः" ।
इति प्रजाः समाश्वास्य भर्तुः राज्यं ररक्ष ह ॥ ११ ॥

## 2 चूडालया कुम्भरूपग्रहणम् ।

अष्टादश च वर्षाणि गतान्येवं यदा तदा ।
"भर्तुः पार्श्वं मया गन्तुं प्राप्तः कालोऽयं" इत्यथ ॥

संचिन्त्य मन्दरं व्योम्ना गत्वा दृष्ट्वा पतिं तदा ।
"अहो नु विषमं मौर्ख्यं दुर्दशां यत्प्रसादतः ॥ १३ ॥

एवंविधाः समायान्ति शास्त्रार्थदर्शिनोऽपि हि ।
तत् अवश्यं इहाद्यैव तत्त्वं संबोधयामि तम् ॥ १४ ॥

बालेयं मम कान्तेति मदुक्तं न करिष्यति ।
तस्मात् तापसवेषेण बोधयामि पतिं क्षणात्" ॥ १५ ॥

इति संचिन्त्य सा ध्यानात् द्विजपुत्रो बभूव ह ।
शुक्लयज्ञोपवीताङ्गं शुक्लाम्बरयुगावृतम् ॥ १६ ॥

तं अग्रस्थितं आलोक्य राजा वचनमब्रवीत् ।
"देवपुत्र महाभाग को भवान् कुत आगतः ॥ १७ ॥

दिवसं सफलं मन्ये यत् त्वामद्यास्मि दृष्टवान्" ।
इत्युक्त्वा पाद्यं अर्घ्यादि दत्तवन्तं च साऽब्रवीत् ॥

"स्फीतं राज्यं समुत्सृज्य काननं सेव्यते त्वया ।
शान्तेन मनसा साधो कच्चित् ते संभृतं तपः ॥ १९ ॥

राजन् मे शृणु वृत्तान्तं यथा पृष्टं त्वयाऽधुना ।
कदाचित् नारदः पूर्वं गुहायां ध्यानमास्थितः ॥ २० ॥

अकस्मात् लीलया नद्यां क्रीडन्तं ललनागणम् ।
आलोकयत् तदा तस्य सहसैव मनो मुनेः ॥ २१ ॥

अनाश्रितविवेकं सत् बभूवानन्दितं स्फुरत् ।
आनन्दवलिते चित्ते क्षुब्धे प्राणानिले स्थिते ॥ २२ ॥

बभूव तस्य तुष्टस्य मदनस्खलितं तदा ।

राजोवाच—

तादृशोऽपि बहुज्ञोऽपि जीवन्मुक्तोऽप्यसौ मुनिः ॥ २३ ॥

कथं एवंविधां ब्रूहि प्राप्तो मदनवश्यताम् ।

कुम्भ उवाच —

स्वरूपे निर्मले सत्ये निमेषमपि विस्मृते ।। २४ ।।

दृश्यं उल्लासं आप्नोति प्रावृषीव पयोधरः ।
सुखदुःखकलास्पन्दो बन्धो जीवस्य नेतरः ।। २५ ।।

तदभावो हि मोक्षः स्यात् इति द्वेधा व्यवस्थितिः ।।

राजोवाच —

अत्युदारं महाश्चर्यं वक्षि त्वं वदतां वर ।। २६ ।।

किं तु तावत् समासेन तवोत्पत्तिं वदाद्य मे ।
ततः श्रोष्यामि यत्नेन ज्ञानगर्भां गिरं तव ।। २७ ।।

कुम्भ उवाच—

क्षीरेण पूरिते कुम्भे मुनिना वीर्यमर्पितम् ।
मासात् संपूर्णसर्वाङ्गः कुम्भाच्चाहं विनिर्गतः ।। २८ ।।

मां पौत्रं वीक्ष्य वेधाश्च चकार ज्ञानपारगम् ।
ततोऽहं कुम्भनामाऽस्मि यथाकामं चराम्यहम् ।। २९ ।।

आस्तां एषा कथा तावत् कः त्वं अद्रौ करोषि किम् ।

राजोवाच—

संसारभयभीतत्वात् निवसामि वनान्तरे ।। ३० ।।

शिखिध्वजोऽहं भूपालः त्यक्त्वा राज्यं इह स्थितः ।
दुःखात् गच्छामि दुःखौघं कुर्वन्नपि क्रियां इमाम् ।।

## 3 चिन्तामण्युपाख्यानम् ।

कुम्भ उवाच—

ज्ञानं हि परमं श्रेयः कैवल्यं तेन लभ्यते ।
अलब्धज्ञानदृष्टीनां क्रिया तु स्यात् परायणम् ॥ ३२ ॥

वासनामात्रसारत्वात् अज्ञस्य सफलाः क्रियाः ।
ज्ञानिनो वासनानाशात् अफलाः सकलाः क्रियाः ॥

यस्याज्ञत्वं क्षयं याति सर्वं ब्रह्मेति भावनात् ।
नोदेति वासना तस्य प्राज्ञस्येवाम्बुधीः मरौ ॥ ३४ ॥

संसारतारकं ज्ञानं त्वं किं अज्ञानवान् स्थितः ।
कोऽहं कथं इदं जातं कथं वा शाम्यति ध्रुवम् ॥ ३५ ॥

कथं बन्धः कथं मोक्षः इति प्रश्नान् उदाहरन् ।
पारावारविदां पादान् कस्मात् राजन् न सेवसे ॥ ३६ ॥

राजोवाच—

अहो नु बोधितोऽस्म्यद्य त्वं मे मित्रं गुरुः पिता ।
यत् उदारतमं वेत्सि यस्मिन् ज्ञाते न शोच्यते ॥ ३७ ॥

भवामि निर्वृतो येन तत् ब्रह्मोपदिशाशु मे ।

कुम्भ उवाच—

यद्युपादेयवाक्योऽहं राजर्षे तत् वदामि ते ॥ ३८ ॥

अन्यथाऽनेकधा प्रोक्तं अपि स्यात् विफलं वचः ।
सर्वशास्त्रार्थतत्त्वज्ञः आसीत् कश्चित् मुनिः पुरा ॥ ३९ ॥

अनन्तयत्नसंसाध्ये स चिन्तामणिसाधने ।
अतीव यत्नवान् भूत्वा हस्तप्राप्यं ददर्श तम् ॥ ४० ॥

किं तु संशयमापन्नो न जग्राह मणिं तदा ।
"अहं अल्पतपाः साधुः वराको मानुषः किल ॥ ४१ ॥

सिद्धयः कथं आयान्ति मां अभाग्यैकभाजनम्" ।
इति तस्मिन् स्थिते मूढे यातो मणिः अदृश्यताम् ॥

एष भूयः क्रियायत्नं कुर्वन् रत्नेन्द्रसाधने ।
ददर्शाथ कचद्रूपं काचखण्डं अखण्डितम् ॥ ४३ ॥

ततः तं मणिं आदाय प्राक्तनीं स श्रियं जहौ ।
"सर्वं चिन्तामणेः अस्मात् प्राप्यते किं धनैः" इति ॥

आदायैतं मणिं मूढः शून्यकाननमाययौ ।
स काचमणिना तत्र महतीं आपदं गतः ॥ ४५ ॥

4 वनगजाख्यानम् ।

आसीत् विन्ध्यवने हस्ती महायूथपयूथपः ।
स बद्धो लोहजालेन हस्तिपेनैकदा किल ॥ ४६ ॥

खेदात् निगडनिर्भेदं दन्ताभ्यां तु चकार सः ।
तद् दृष्ट्वा तं पुनर्बद्धुं निश्चित्य हस्तिपः तदा ॥ ४७ ॥

पपाताथ गजेन्द्रस्य मूर्ध्नि तालतरोः अधः ।
अपतत् दुर्मतिः भूमौ अप्राप्य करिणः शिरः ॥ ४८ ॥

तं पुरः पतितं दृष्ट्वा महेभः करुणां ययौ ।
केऽपि स्फारगुणाः सन्ति तिर्यग्जातिगतेष्वपि ॥ ४९ ॥

दयया तं परित्यज्य स्वप्रदेशं ययौ गजः ।
गते गजे समुत्थाय पुनः तस्य जिघृक्षया ॥ ५० ॥

स खातवलयं चक्रे हस्तिपः कानने शठः ।
तस्मिन् निपतितः खाते वारणो विहरन् वने ॥ ५१ ॥

ततो भूयो दृढं बद्धः हस्तिपेन महागजः ।
अहनिष्यत् पुरैवासौ यद्यग्रे पतितं रिपुम् ॥ ५२ ॥

तत् नालप्स्यत तद्दुःखं गजः खातनिबन्धनम् ।

राजोवाच —

मणिसाधकविन्ध्येभबन्धनात् सूचितं वद ॥ ५३ ॥

कुम्भ उवाच —

रत्नसंसाधकः प्रोक्तः स त्वमेव महीपते ।
विद्धि चिन्तामणिं साधो सर्वत्यागं अकृत्रिमम् ॥ ५४ ॥

संत्यक्तं भवता सर्वं शेषिता किं त्वहंमतिः ।
असंपूर्णे परित्यागे दृष्टः काचः त्वया तपः ॥ ५५ ॥

चिन्तामणिः मया प्राप्तः इत्यलं बुद्धवानसि ।
न लब्धवान् भवान् साधो स्फटिकस्यापि खण्डिकाम् ॥

योऽसौ विन्ध्यवने हस्ती सोऽस्मिन् भूमितले भवान् ।
यौ वैराग्यविवेकाख्यौ तौ तस्य दशनौ सितौ ॥ ५७ ॥

हस्तिपस्तु त्वदज्ञानं आशापाशाश्च शृङ्खला ।
भोगान् संत्यजता भग्ना सा त्वया भवति ध्रुवम् ॥ ५८ ॥

त्वयि त्यजति तद्राज्यं अज्ञानं पतितं कृतम् ।
हतं यदि तदाऽज्ञानं तत् त्वां नाहनिष्यत पुनः ॥ ५९ ॥

तपःप्रपञ्चखाते त्वं पातितोऽज्ञानवैरिणा ।
राजन् सर्वपरित्यागः कस्मात् नानुष्ठितः त्वया ॥ ६० ॥

इति श्रीवासिष्ठसंग्रहे शिखिध्वजतपो नाम
षड्विंशः सर्गः ॥

---

## ॥ सप्तविंशः सर्गः ॥

# ॥ चूडालोपदेशः ॥

—*—

### 1 सर्वत्यागः ।

राजोवाच —

"राज्यं त्यक्तं गृहं देशो दाराः त्यक्ताश्च बान्धवाः ।
एतान् संत्यजता सर्वत्यागः किं न मया कृतः ॥ १ ॥

एते चेत् मम नो सर्वं तत् सर्वं वनमेव हि ।
तच्च त्यजाम्यहं नूनं" इत्युक्त्वा दृढनिश्चयः ॥ २ ॥

वने सक्तिं ममार्जासौ वशी धीरः शिखिध्वजः ।

कुम्भ उवाच—

एतच्चापि न ते सर्वं सर्वत्यागः कथं तव ॥ ३ ॥

एतत् चेत् मम नो सर्वं सर्वं मे भाजनादिकम् ।
संत्यजामीति निश्चित्य दग्ध्वा पात्रादिकं ततः ॥ ४ ॥

राजा प्रोवाच सन्तुष्टः "सर्वत्यागी स्थितोऽस्म्यहम् ।
यावत् यावत् प्रहीयन्ते विविधाः बन्धहेतवः ॥ ५ ॥

तावत् तावत् समायाति परमां निर्वृतिं मनः ।
दिगम्बरो भवाम्येव किं अन्यत् अवशिष्यते ॥ ६ ॥

कुम्भ उवाच—

सर्वं तु न परित्यक्तं मा मुधाऽभिनयं कुरु ।
एवमुक्तं वचः श्रुत्वा किञ्चित् सञ्चिन्त्य भूपतिः ॥ ७ ॥

" शिष्यते सर्वसंत्यागे देहो मांसमयाकृतिः ।
विनाश्य च तमप्यद्य सर्वत्यागी भवाम्यहम् " ॥ ८ ॥

इत्युक्त्वोत्थितं एनं तु कुम्भरूपाऽभ्युवाच सा ।
" त्यक्तेनापि शरीरेण सर्वत्यागो न सिध्यति ॥ ९ ॥

येनायं क्षोभ्यते देहो यत् बीजं जन्मकर्मणाम् ।
तत् संत्यजसि चेत् त्याज्यं तत् महात्यागवान् भवेः " ॥

राजोवाच—

केनायं चाल्यते देहः किं बीजं जन्मकर्मणाम् ।
कस्मिन् त्यक्ते परित्यक्तं सर्वं भवति मे वद ॥ ११ ॥

कुम्भ उवाच—

चित्तं विद्धि जगज्जालं चित्तं सर्वमिति स्मृतम् ।
तस्मिन् साधो परित्यक्ते सर्वत्यागो भवेत् ध्रुवम् ॥१२॥

जन्मनां कर्मणां वाऽपि चित्तं बीजं उदाहृतम् ।
पादपः पवनेनेव देहः चित्तेन चाल्यते ॥ १३ ॥

चित्तत्यागं विदुः सर्वत्यागं त्यागविदो जनाः ।

2 चित्तत्यागक्रमः ।

राजोवाच—

चित्तस्यादौ स्वरूपं त्वं तत्त्यागमपि मे वद ॥ १४ ॥

कुम्भ उवाच—

वासनैव महाराज स्वरूपं विद्धि चेतसः ।
अहमर्थोदयो योऽयं सर्वानर्थैकभाजनम् ॥ १५ ॥

एतत् चित्तद्रुमस्यास्य विद्धि बीजं महामते ।
एतस्मात् प्रथमोद्भिन्नात् अङ्कुरोऽनुभवाकृतिः ॥ १६ ॥

निश्चयात्मा निराकारो बुद्धिः इत्येव सोच्यते ।
अस्य बुद्ध्यभिधानस्य याऽङ्कुरस्य प्रपीनता ॥ १७ ॥

सङ्कल्परूपिणी तस्याः चित्तनाम मनोऽभिधा ।
वासनाः विविधाः शाखाः फलन्त्यो विविधं फलम् ॥

शाखाविलवनं गौणं मुख्यं मूलविकर्तनम् ।
स्वात्मतत्त्वविचारो हि चित्तबीजस्य नाशकः ॥ १९ ॥

राजोवाच—

अहं देहादिकं नेति बहुशः प्रविचारितम् ।
चित्तद्रुमस्य यत् बीजं अहंभावात्मकं हृदि ॥ २० ॥

तत्तु त्यक्तुं न शक्नोमि त्यक्तं त्यक्तं उपैति माम् ।
मुने यस्मात् न शक्नोमि तेन तप्ये सुदारुणम् ॥ २१ ॥

अहमित्यस्य दोषस्य वेदनं वेद्मि कारणम् ।
तत् यथोपशमं याति तत् मे वद मुनीश्वर ॥ २२ ॥

चितः चेत्योन्मुखत्वेन दुःखायायं अहं स्थितः ।
चेत्योपशमनं ब्रूहि मुने दुःखोपशान्तये ॥ २३ ॥

कुम्भ उवाच—

कारणज्ञोऽसि मे ब्रूहि वेदनस्यापि कारणम् ।

राजोवाच—

शरीरादितयोदेति वेदनं वस्तुसत्तया ॥ २४ ॥

कुम्भ उवाच—

विद्यते यदि देहादि वस्तुसत्ता तदा भवेत् ।

राजोवाच—

सदाऽनुभूयमानोऽयं देहो न विद्यते कथम् ॥ २५ ॥

कुम्भ उवाच—

अकारणं हि यत् वस्तु तत् मिथ्या रज्जुसर्पवत् ।

राजोवाच—

आद्यः पितामहो ब्रह्मा जगतः कारणं न किम् ॥ २६ ॥

कुम्भ उवाच—

सर्गादौ केवलं शान्तं ब्रह्मैव विद्यते परम् ।
द्वितीयकलनाभावात् वेधसोऽस्ति न कारणम् ॥ २७ ॥

राजोवाच—

यद्येवं परमं ब्रह्म कारणं वेधसोऽस्ति हि ।
कारणं तस्य नास्तीति कथं प्रत्येमि तत् वद ॥ २८ ॥

कुम्भ उवाच—

अद्वितीयं अनाद्यन्तं शिवं संशान्तं अव्ययम् ।
तत् कथं कस्य केनैव कर्तृ भोक्तृ कदा भवेत् ॥ २९ ॥

चिन्मात्रकल्पितो वेधाः चिदेवेति विनिश्चितः ।
तन्मात्रजनितः सर्गः तदात्मक इति स्थितिः ॥ ३० ॥

अतो नेदं कृतं किञ्चित् तस्मात् न विद्यते जगत् ।

3　शिखिध्वजनिष्ठा ।

इत्येवं बोधितो राजा भावयन् तत् निरन्तरम् ॥ ३१ ॥

स्वयमात्मपदे तस्मिन् क्षणं परिणतोऽभवत् ।
ततो मुहूर्तमात्रेण प्रबुद्धः पुनरब्रवीत् ॥ ३२ ॥

भगवन् त्वत्प्रसादेन प्राप्तं आत्मपदं मया ।
सतां विदितवेद्यानां सङ्गः सारफलप्रदः ॥ ३३ ॥

इदं महामृतं पूर्वं कथं नासादितं मया" ।

कुम्भ उवाच —

मनस्युपशमं याते त्यक्तभोगैषणे स्थिते ॥ ३४ ॥

कषायपाके निर्वृत्ते सफलाः देशिकोक्तयः ।
प्रबुद्धोऽसि विमुक्तोऽसि स्वरूपे तिष्ठ निर्मलः ॥ ३५ ॥

राजोवाच —

प्रबुद्धानां कथं चित्तं विहरन्ति कथं च ते ।

कुम्भ उवाच—

पुनर्जननयोग्या या वासना घनवासना ॥ ३६ ॥

सा प्रोक्ता चित्तशब्देन न सा तज्ज्ञस्य विद्यते ।
अथ चेतसि तत्त्वज्ञ स्पन्दास्पन्दौ त्वं एकताम् ॥ ३७ ॥

नीत्वा तिष्ठ यथाकामं ऐक्यमागत्य शाश्वतम् ।

राजोवाच —

स्पन्दास्पन्दौ उभौ चित्ते ऐक्यं तु गच्छतः कथम् ॥

कुम्भ उवाच —

सर्गः चित्स्पन्दमात्रात्मा सम्यग्दृष्टौ विलीयते ।
शास्त्रसज्जनसंपर्कसन्तताभ्यासयोगतः ॥ ३९ ॥

चेतस्यमलतां याते जायते स्वयमेव सा ।
त्वया सदैव संरक्ष्या दृष्टिः एषा हि पावनी ॥ ४० ॥

एवं उक्त्वा गते कुम्भे परं विस्मयमागतः ।
"अहो नु शीतला शुद्धा शान्तेयं पदवी निजा" ।४१॥

एवं संचिन्त्य राजाऽसौ निर्विकल्पे निराश्रये ।
प्रतिष्ठां निश्चलां प्राप्य संतस्थौ गिरिशृङ्गवत् ॥ ४२ ॥

4 शिखिध्वजप्रबोधनम् ।

चूडाला तु पुरं गत्वा व्योम्ना तत्र दिनत्रयम् ।
निर्वर्त्य राज्यकार्याणि चागत्य कुम्भरूपिणी ॥ ४३ ॥

निर्विकल्पसमाधिस्थं भूपं स्पृष्ट्वा व्यचिन्तयत् ।
"अस्त्येव सत्त्वशेषोऽस्य हृदि संबोधकारणम्" ॥ ४४ ॥

राम उवाच —

भृशं प्रशान्तचित्तस्य काष्ठलोष्टसमस्थितेः ।
सत्त्वशेषः कथं ब्रह्मन् ज्ञायते ध्यानशालिनः ॥ ४५ ॥

वसिष्ठ उवाच —

प्रबोधकारणं ज्ञस्य दुर्लक्ष्याणुवपुः हृदि ।
विद्यते सत्त्वशेषोऽन्तः बीजे पुष्पफलं यथा ॥ ४६ ॥

चित्तस्पन्दवियुक्तस्य तस्याचलसमस्थितेः ।
कायः समसमाभोगो न ग्लायति न हृष्यति ॥ ४७ ॥

यदि देहे न सत्त्वं स्यात् तदा पञ्चत्वमाप्नुयात् ।
स्वदेहं सा परित्यज्य चित्तत्त्वे संस्थिता सती ॥ ४८ ॥

तच्चित्तस्पन्दनं कृत्वा स्वदेहं पुनराययौ ।
कुम्भाकृतिरथ स्थित्वा सामगानं चकार सा ॥ ४९ ॥

सामगानस्वनं श्रुत्वा प्रबुध्य भूपतिः तदा ।
ददर्शाग्रे स्थितं कुम्भं सामवेदमिवापरम् ॥ ५० ॥

"अहो बत वयं धन्याः पुनः प्राप्तो मुनिः स्वतः" ।
इत्येवोदाहरन्तं तं कुम्भो राजानं अब्रवीत् ॥ ५१ ॥

"यतः प्रभृति यातोऽस्मि त्वत्सकाशात् अहं तदा ।
ततः प्रभृति मे चेतः त्वयैवेह समं स्थितम्" ॥ ५२ ॥

राजोवाच —

अहोऽहं सुकृती यस्मात् इच्छा ते मम संगमे ।

कुम्भ उवाच —

परे पदे महानन्दे कच्चित् विश्रान्तवान् असि ॥ ५३ ॥

इदं भेदमयं दुःखं कच्चित् संत्यक्तवान् असि ।

राजोवाच —

भगवन् त्वत्प्रसादेन लब्धो लब्धव्यनिश्चयः ॥ ५४ ॥

सर्वत्रैवातितृप्तोऽस्मि संस्थितोऽस्मि गतज्वरः ।
एवमेतौ समोत्साहौ समसत्त्वौ बभूवतुः ॥ ५५ ॥

इति श्रीवासिष्ठसंग्रहे चूडालोपदेशो नाम
सप्तविंशः सर्गः ॥

## ॥ अष्टाविंशः सर्गः ॥

## ॥ शिखिध्वजपरीक्षा ॥

### 1 कुम्भस्य रात्रौ स्त्रीत्वम् ।

वसिष्ठ उवाच —

दिनैः कतिपयैः एवं समचित्ततया चरन् ।
कुम्भतुल्यो बभौ राजा दृष्ट्वा तं च तथास्थितम् ॥ १ ॥

चूडाला सा तमामन्त्र्य त्यक्त्वा कुम्भवपुः गता ।
राजकार्याण्यशेषाणि पुरे संपाद्य सत्वरम् ॥ २ ॥

शिखिध्वजस्य पुरतः कुम्भरूपधराऽऽगता ।
कुम्भं खिन्नमुखं दृष्ट्वा राजोवाचेदमादरात् ॥ ३ ॥

"देवपुत्र नमस्तेऽस्तु विमना इव लक्ष्यसे ।
सतां विदितवेद्यानां श्रमो नास्ति विषादजः" ॥ ४ ॥

कुम्भ उवाच —

यावद्देहं अवस्थासु समचित्ततयैव ये ।
कर्मेन्द्रियैः न तिष्ठन्ति न ते तत्त्वविदः शठाः ॥ ५ ॥

परमेष्ठिप्रभृतयः सर्वे एवोदिताशयाः ।
देहावस्थासु तिष्ठन्ति नियतेः एष निश्चयः ॥ ६ ॥

कथयामि तवाशेषं स्वर्गे वृत्तं यत् अद्य मे ।
सुहृद्यावेदितं दुःखं परं आयाति तानवम् ॥ ७ ॥

अहं तावत् इतो यातः चिरं स्थित्वा त्रिविष्टपे ।
इहागन्तुं तदाऽऽकाशं समुत्पतितवान् अहम् ॥ ८ ॥

अथाग्रे वारिपूर्णानां मेघानां मध्यवर्त्मना ।
अपश्यं मुनिं आयान्तं अहं दुर्वाससं जवात् ॥ ९ ॥

कृत्वा तस्य नमस्कारं लीलयोक्तं मया नृप ।
"मुने नीलाभ्रवस्त्रः त्वं अभिसारिकया समः" ॥

इत्याकर्ण्य मुमोचासौ कोपात् शापं इमं मुनिः ।
"स्तनकेशवती कान्ता रात्रौ योषा भविष्यसि" ॥

एवं उद्विग्नचित्तोऽद्य प्राप्तोऽहं नभसः तलात् ।
अतिवाह्यं दिनान्तेषु स्त्रीत्वं एकं मया कथम् ॥ १२ ॥

राजोवाच—

परिदेवनया कार्यं किञ्चित नैव हि विद्यते ।
यत् आयाति तत् आयातु देहस्यात्मा न लिप्यते ॥

सायं सन्ध्यां उपास्याथ स्थितयोः अनयोः शनैः ।
कुम्भो धृत्वा वपुः स्त्रैणं इदमाह शिखिध्वजम् ॥ १४ ॥

"पतामीव स्फुरामीव द्रवामीवाङ्गयष्टिभिः ।
पश्येमे परिवर्धन्ते राजन् मम शिरोरुहाः ॥ १५ ॥

पश्येमौ मम जायेते प्रोन्मुखौ उरसि स्तनौ ।
आगुल्फं अवलम्बानि संपद्यन्तेऽम्बराणि मे" ॥ १६ ॥

राजोवाच—

अवश्यंभाविकार्येऽस्मिन् मा खिन्नहृदयो भव ।
एवं आश्वासिता तेन रात्रौ स्त्रीत्वं उपागता ॥ १७ ॥

कुम्भरूपधरा चाह्नि विजहार दिने दिने ।

2 प्रलोभनम् ।

ततः कतिपयेष्वेवं गतेषु दिवसेषु सा ॥ १८ ॥

इदं प्रोवाच भर्तारं कुम्भरूपधरा सती ।
"निशायां प्रत्यहं तावत् भवाम्येवाहमङ्गना ॥ १९ ॥

तदिच्छाम्यङ्गनाधर्मं निपुणीकर्तुमीदृशम् ।
गृहाण मां विवाहेन भवानेव पतिः भव" ॥ २० ॥

राजोवाच—

कृतेनानेन कार्येण न शुभं नाशुभं सखे ।
पश्यामि, तत् महाबुद्धे यथेच्छसि तथा कुरु ॥ २१ ॥

"एवं यदि महीपाल लग्नं अद्यैव शोभनम्" ।
इत्युक्त्वा कुम्भ उत्थाय सह तेन महीभृता ॥ २२ ॥

श्रीगन्धपुष्परत्नादिसञ्चयं कृतवान् असौ ।
सान्ध्ये कर्मणि निर्वृत्ते वधूत्वं कुम्भ आययौ ॥ २३ ॥

"क्रमेणाग्निं च संज्वाल्य मम पाणिं गृहाण भोः" ।
एवं उक्तः तया भूपः तत् सर्वं समवर्तयत् ॥ २४ ॥

एवं विवाहितौ हृष्टौ संपन्नौ स्निग्धदम्पती ।
दिनैः त्रिभिः त्रिभिः गत्वा निद्रां याते शिखिध्वजे ॥

चूडाला राजकार्याणि कृत्वा सा पुनराययौ ।
ततो यातेषु मासेषु शनैः कतिपयेषु सा ॥ २६ ॥

चूडाला चिन्तयामास परीक्षेऽहं शिखिध्वजम् ।
सांप्रतं भोगभारेणेतीन्द्रं प्रादर्शयत् तदा ॥ २७ ॥

इन्द्र उवाच—

उत्तिष्ठ स्वर्गमागच्छ तत्र सर्वे त्वदुन्मुखाः ।
आकल्पं विविधा भोगाः भोक्तव्याः सन्ति ते प्रभो ॥

राजोवाच —

सर्वत्रैव मम स्वर्गो गम्यो न कुत्रचित् मया ।
ततस्तां शममानीय मायां सा समचिन्तयत् ॥ २९ ॥

"नेमं हरति भोगेच्छा, केनचित् बुद्धिहारिणा ।
रागद्वेषप्रधानेन पुनः संक्षोभयाम्यहम्" ॥ ३० ॥

एकदा कल्पितं कान्तं सुमनःशयने स्थितम् ।
आलिङ्ग्य मोदात् तिष्ठन्तीं आलक्ष्यापि तुतोष सः ॥

'विघ्नं मा कुरुतं भीतौ" इत्युक्त्वा निर्जगाम सः।
ततो मुहूर्तमात्रेण लज्जावनमिताननाम् ॥ ३२ ॥

राजानं समुपागम्य तिष्ठन्तीं अब्रवीत् नृपः।
"भूयः तोषयितुं गच्छ कान्तं प्रणयवृत्तिभिः ॥ ३३ ॥

परस्परेप्सितस्नेहो दुर्लभो हि जगत्त्रये"।

3 चूडालया समाधानम्।

एवं समतया तत्र स्थिते तस्मिन् शिखिध्वजे ॥ ३४ ॥

"अहो बत परं साम्यं भगवान् अयं आगतः।
आत्मवृत्तान्तमखिलं तत् एनं स्मारयाम्यहम्" ॥ ३५ ॥

इति संचिन्त्य चूडाला स्वकीयं वपुः आददे।
तां दृष्ट्वा विस्मितो राजा साश्चर्यं इदमब्रवीत् ॥ ३६ ॥

"का त्वं कुतस्त्वमायाता किमर्थमिह तिष्ठसि।
अङ्गेन व्यवहारेण स्मितेनानुनयेन च ॥ ३७ ॥

मम जाया विलासेन चूडालेवोपलक्ष्यसे"।

चूडालोवाच —

एवमेव प्रभो विद्धि चूडालाऽस्मि न संशयः ॥ ३८ ॥

कुम्भादिदेहनिर्माणं त्वां बोधयितुमेव मे।
सर्वं पश्यसि तत्त्वज्ञ ध्यानेनाथावलोकय ॥ ३९ ॥

आ स्वराज्यपरित्यागात् चूडालादर्शनावधि ।
ध्यानेनालोक्य भूपालो विरराम समाधितः ॥ ४० ॥

राजोवाच —

एवं दुरुत्तरात् अस्मात् संसारकुहरात् अहम् ।
उत्तारितो यथा युक्त्या सा हि केनोपमीयते ॥ ४१ ॥

कथं अस्योपकारस्य करिष्ये ते प्रतिक्रियाम् ।

चूडालोवाच —

देव शुष्कक्रियाजालपरे त्वय्याकुलात्मनि ॥ ४२ ॥

भूयो भूयो विचिन्त्याहं त्वदर्थं दुःखिताऽभवम् ।
तेन त्वदवबोधात् मे स्वार्थ एवोपपादितः ॥ ४३ ॥

मया, तत्र कथं देवः करोति मम गौरवम् ।

राजोवाच —

निरीहोऽस्मि निरंशोऽस्मि स्वस्थोऽस्मि विगताशयः ॥

यत् अस्ति तत् तदेवास्मि वक्तुं शक्नोमि नेतरत् ।
प्रसादेन विशालाक्ष्याः तीर्णोऽस्मि भवसागरात् ॥ ४५ ॥

4 स्वराज्याभिषेचनम् ।

चूडालोवाच —

किं इदानीं प्रभो ब्रूहि रोचते ते महामते ।

राजोवाच —

प्रतिषेधं न जानामि न जानाम्यभिवाञ्छितम् ॥ ४६ ॥

न स्तौमि न च निन्दामि यथेच्छसि तथा कुरु।

चूडालोवाच —

यद्येवं तत् महाबाहो समाकर्णय सन्मतम् ॥ ४७ ॥

राज्येन प्रकृतेनेमं कालं नीत्वा क्रमेण च।
विदेहतां प्रयास्यामः प्रभो कालेन केनचित् ॥ ४८ ॥

राजोवाच —

युक्तं उक्तं विशालाक्षि त्वयैतत्व समया धिया।
यथासंस्थानमेवेमौ तिष्ठावः स्वस्थतां गतौ ॥ ४९ ॥

अथोत्थाय तु चूडाला रत्नकुम्भं पुरःस्थितम्।
कान्तं सङ्कल्पयामास पूर्णं सप्ताब्धिवारिभिः ॥ ५० ॥

तेन मङ्गलकुम्भेन तं पूर्वाभिमुखं स्थितम्।
भार्या भर्तारमेकान्ते स्वराज्येऽभिषिषेच सा ॥ ५१ ॥

तथाऽऽसने समास्थाप्य महादेवीपदे ततः।
अभिषिक्तां च चूडालां चकार स शिखिध्वजः ॥ ५२ ॥

ततः सङ्कल्पमात्रेण सैन्येन पूरितं वनम्।
ततो द्विपवरं दिव्यं आरूढौ नृपदम्पती ॥ ५३ ॥

ततः प्रस्थाय राजाऽसौ महिष्या प्रियया सह ।
प्रापाल्पेनैव कालेन स्वां पुरीं स्वर्गशोभनाम् ॥ ५४ ॥

तारतूर्यादिना पौरैः प्रत्युद्यातो विवेश ताम् ।
दशवर्षसहस्राणि राज्यं कृत्वा महीतले ॥ ५५ ॥

सह चूडालया राम विरतो देहधारणात् ।
देहं त्यक्त्वा जगामासौ अपुनर्जन्मने नृपः ॥ ५६ ॥

एतत् ते कथितं सर्वं शिखिध्वजकथानकम् ।
अनेन गच्छ मार्गेण न कदाचन खिद्यसे ॥ ५७ ॥

इति श्रीवासिष्ठसंग्रहे शिखिध्वजपरीक्षा नाम
अष्टाविंशः सर्गः ॥

---

॥ एकोनत्रिंशः सर्गः ॥

—※—

## ॥ चिन्मात्रस्थितिः ॥

### 1 कचोपाख्यानम् ।

वसिष्ठ उवाच—

शिखिध्वजः क्रमेणैव यथा बोधं अवाप्तवान् ।
कचो बृहस्पतेः पुत्रः प्राप्तो बोधं तथैव हि ॥ १ ॥

कचो बाल्यात् समुत्तीर्णः संसारोत्तरणोन्मुखः ।
पदपदार्थतत्त्वज्ञो बृहस्पतिं अभाषत ॥ २ ॥

"कथं उत्तीर्यते तात घोरः संसारसागरः ।"

बृहस्पतिरुवाच —

उत्तीर्यते निरुद्वेगं सर्वत्यागेन पुत्रक ॥ ३ ॥

इत्युक्तः स कचः सर्वं त्यक्त्वैकान्तवनं ययौ ।
बृहस्पतेः तद्गमनं नोद्वेगाय बभूव ह ॥ ४ ॥

संयोगे च वियोगे च न क्षुभ्यन्ति महाशयाः ।
एकदा पितरं प्राप्तं नत्वा पप्रच्छ तं कचः ॥ ५ ॥

"अद्येदं अष्टमं वर्षं सर्वत्यागः कृतो मया ।
तथाऽपि तात विश्रान्तिं नाधिगच्छाम्यहं कथम्" ॥ ६ ॥

"सर्वमेव त्यज" इत्युक्त्वा ययौ वाचस्पतिः दिवम् ।
गते तस्मिन् कचो देहात् वल्कलाद्यप्यथात्यजत् ॥ ७ ॥

वर्षत्रयात् परं चापि प्राप्तं पितरमब्रवीत् ।
'कन्थां त्यक्त्वाऽपि विश्रान्तिः नैवास्ति किं करोम्यहम्' ॥

"चित्तं सर्वं हि, तत्त्यागं सर्वत्यागं विदुः बुधाः" ।
इत्युक्त्वा च गते ताते चित्तं किं इत्यचिन्तयत् ॥ ९ ॥

पदार्थवृन्दं देहादि न हि चित्तं भवेत् इति ।
निश्चित्य पितरं गत्वा पुनः पप्रच्छ तं कचः ॥ १० ॥

'चित्तं किं प्रोच्यते तात', तस्योत्तरं उवाच सः ।
'अन्तर्योऽयं अहंभावो जन्तोः तत् चित्तं उच्यते' ॥

कच उवाच—

मन्येऽस्य दुष्करः त्यागः स त्यक्तुं शक्यते कथम् ।

बृहस्पतिरुवाच—

सुकरोऽहंकृतेः त्यागो न क्लेशोऽत्र मनागपि ॥ १२ ॥

मिथ्यारूपो ह्यहंभावो लीयते तत्त्वभावनात् ।
दिक्कालाद्यनवच्छिन्नं स्वच्छं नित्योदितं ततम् ॥ १३ ॥

सर्वार्थमयं एकार्थं चिन्मात्रं अमलं भवान् ।
तदेव भावयन् साधु शान्तः तिष्ठ गतज्वरः ॥ १४ ॥

इति योगं पितुः प्राप्य जीवन्मुक्तो बभूव सः ।
निर्ममो निरहङ्कारः छिन्नग्रन्थिः प्रशान्तधीः ॥ १५ ॥

कचो यथा स्थितो राम तथा तिष्ठाविकारवान् ।

2 मिथ्यापुरुषोपाख्यानम् ।

इमां आख्यायिकां चित्रां शृणु राघव शोभनाम् ॥ १६ ॥

मायायन्त्रमयः कश्चित् गूढो मौर्ख्येन केवलम् ।
निष्प्रपञ्चे क्वचित् शून्ये जातः तत्रैव तिष्ठति ॥ १७ ॥

तस्मात् अन्यत् न तत्रास्ति यत् अस्ति च स एव तत् ।
यच्चान्यत् तत् तदाभासं न तु पश्यति मूढधीः ॥ १८ ॥

इष्टस्य वस्तुनः खस्य रक्षार्थं अकरोत् गृहम् ।
अस्य कोशे बबन्धास्थां रक्षितं खं मयेत्यसौ ॥ १९ ॥

अथ कालेन तस्मिंश्च गृहे नाशं उपागते ।
"हा गृहाकाश नष्टस्त्वं, हा क यातोऽसि च क्षणात्" ॥

इति शोकात् पुनश्चक्रे खरक्षार्थं स कूपकम् ।
काले कूपे लयं नीते कूपाकाशो गतो न्विति ॥ २१ ॥

कूपाकाशप्रलापान्ते शीघ्रं कुम्भं अथाकरोत् ।
कुम्भाकाशपरो भूत्वा मोहात् निर्वृतिं आययौ ॥ २२ ॥

तस्मिन्नपि विनष्टे सः शोकात् कुण्डं चकार सः ।
तस्मिन्नपि विनष्टे सः चतुःशालं चकार सः ॥ २३ ॥

तस्मिन् कालात् गते नाशं कुशूलं स चकार ह ।
तदप्यस्य जहाराशु कालो वात इवाम्बुदम् ॥ २४ ॥

"कुशूलाकाश नष्टस्त्वं" इत्यसौ पर्यतप्यत ।
एवमाकाशरक्षार्थं यतमानः स मूढ़धीः ॥ २५ ॥

दुःखात दुःखतरं प्राप्य नैव निर्वृतिं आसवान् ।
एवं आत्माऽभवत् शुद्धः सर्गादौ अम्बरोपमम् ॥ २६ ॥

तस्मात् उदेत्यहंकारः पूर्वं स्पन्द इवानिलात् ।
अनात्माऽऽत्मैकरक्षार्थं देहान् नानाविधान् असौ ॥२७॥

कूपकुण्डचतुःशालकुम्भकुशूलतुल्यकान् ।
भूयो भूयो विनाशेऽपि सृजन्नाकुलतां गतः ॥ २८ ॥

आकाशादपि विस्तीर्णः शुद्धः सूक्ष्मः शिवः शुभः ।
य आत्मा स कथं केन गृह्यते रक्ष्यतेऽथवा ॥ २९ ॥

घटादिषु प्रणष्टेषु यथाऽऽकाशो न नश्यति ।
तथा देहेषु नष्टेषु देही नित्यो न नश्यति ॥ ३० ॥

स मिथ्यापुरुषो यद्वत् रक्षन् व्योमात्मशङ्कया ।
घटाकाशादिषु क्लिष्टः तथा मा क्लेशवान् भव ॥ ३१ ॥

शुद्धचिन्मात्र आत्माऽयं इति मत्वा सुखी भव ।

3 भृङ्गीशोपाख्यानम् ।

आत्मतत्त्वस्य विस्मृत्या जगत् प्राप्नोति सत्यताम् ॥३२॥

रज्जुतत्त्वस्य निस्मृत्या भुजगो दृश्यते यथा ।
कनकव्यतिरेकेण केयूरं येन भावितम् ॥ ३३ ॥

केयूरमेव तत् तस्य न तस्य कनकं हि तत् ।
कनकाव्यतिरेकेण केयूरं येन भाव्यते ॥ ३४ ॥

कनकैकमहाबुद्धिः निर्विकल्पः स उच्यते ।
नानात्वं अखिलं त्यक्त्वा शुद्धचिन्मात्रकोटरे ॥ ३५ ॥

संवेद्येन विनिर्मुक्ते संवित्तत्त्वे स्थिरो भव ।
पदार्थजाते सर्वस्मिन् संवित्सारतया स्थितः ॥ ३६ ॥

अखिलं संविदेवेदं जगत् नान्याऽस्ति कल्पना ।
संभवात् अखिलाकारेणैकस्या एव संविदः ॥ ३७ ॥

संवेद्यमपि नास्त्येव बन्धमोक्षौ अतः कथम् ।
महाकर्ता महाभोक्ता महात्यागी भवानघ ॥ ३८ ॥

एतत् त्रयं पुरा प्रोक्तं भृङ्गीशाय हि शम्भुना ।
तत् तेऽहं संप्रवक्ष्यामि श्रद्धया शृणु राघव ॥ ३९ ॥

ईश्वर उवाच —

रागद्वेषौ सुखं दुःखं धर्माधर्मौ फलाफले ।
यः करोत्यनपेक्ष्यैव महाकर्ता स उच्यते ॥ ४० ॥

सर्वत्र विगतस्नेहो यः साक्षिवत् अवस्थितः ।
निरिच्छं वर्तते कार्ये महाकर्ता स उच्यते ॥ ४१ ॥

जन्मस्थितिविनाशेषु सोदयास्तमयेषु च ।
सममेव मनो यस्य महाकर्ता स उच्यते ॥ ४२ ॥

सुखैः दुःखैः क्रियायोगैः भावाभावैः भ्रमप्रदैः ।
न संक्षुभ्यति यो मुक्तैः महाभोक्ता स उच्यते ॥ ४३ ॥

इदं भोज्यं अभोज्यं चेत्येवं त्यक्त्वा विकल्पनम् ।
गताभिलाषं यो भुङ्क्ते महाभोक्ता स उच्यते ॥ ४४ ॥

आपदं संपदं मोहं आनन्दं अपरं परम् ।
यो भुङ्क्ते समया बुद्ध्या महाभोक्ता स उच्यते ॥

धर्माधर्मौ सुखं दुःखं तथा मरणजन्मनी ।
धिया येन परित्यक्ताः महात्यागी स उच्यते ॥ ४६ ॥

सर्वेच्छाः सकलाः शङ्काः सर्वेहाः सर्वनिश्चयाः ।
धिया येन परित्यक्ताः महात्यागी स उच्यते ॥ ४७ ॥

यावती दृश्यकलना सकलेयं विलोक्यते ।
सा येन सुष्ठु संत्यक्ता महात्यागी स उच्यते ॥ ४८ ॥

इत्युक्तं देवदेवेन भृङ्गीशाय पुराऽनघ ।
एतां दृष्टिं अवष्टभ्य तिष्ठ राम गतज्वरः ॥ ४९ ॥

इति श्रीवासिष्ठसंग्रहे चिन्मात्रस्थितिः नाम
एकोनत्रिंशः सर्गः ॥

## ।। त्रिंशः सर्गः ।।

## ।। इक्ष्वाकूपाख्यानम् ।।

### 1 संसारकारणम् ।

वसिष्ठ उवाच—

गलिते वा गलद्रूपे चित्तेऽहङ्कारनामनि ।
कोपः तानवं आयाति मोहो मान्द्यं हि गच्छति ।। १ ।।

कामोऽपि क्षान्ततां याति लोभः क्वापि पलायते ।
न दुःखानि विलिम्पन्ति न वल्गन्ति सुखानि च ।।

सर्वत्र समतोदेति हृदि शैत्यप्रदायिनी ।
भवतां आदिपुरुषः इक्ष्वाकुः नाम भूपतिः ।। ३ ।।

एकदा पृष्टवान् नत्वा ब्रह्मलोकागतं मनुम् ।
"अस्य दृश्यप्रपञ्चस्य को हेतुः स्यात्" इति स्वयम् ।।

मनुरुवाच —

यत् इदं दृश्यते किंचित् तत् नास्ति नृप किंचन ।
मरुस्थले यथा वारि खे वा गन्धर्वपत्तनम् ।। ५ ।।

मनःषष्ठेन्द्रियातीतं यत्तु नो दृश्यते क्वचित् ।
अविनाशं तदस्तीह तत् सत् आत्मेति कथ्यते ।। ६ ।।

इयं तु सर्वदृश्याढ्या राजन् सर्गपरम्परा ।
तस्मिन्नेव महादर्शे प्रतिबिम्बमुपागता ॥ ७ ॥

संकल्पोन्मुखतां याताः चिन्मात्रसंविदो यथा ।
तदा जीवत्वं आयान्ति यथा ह्यापः तरङ्गताम् ॥ ८ ॥

सुखदुःखदशा मोहो मनस्येवास्ति नात्मनि ।
न शास्त्रैः गुरुणा वाऽपि दृश्यते परमेश्वरः ॥ ९ ॥

दृश्यते स्वात्मनैवात्मा स्वया सत्त्वस्थया धिया ।
देहोऽहं इति या बुद्धिः सा संसारनिबन्धिनी ॥ १० ॥

न कदाचित इयं बुद्धिः आदेया हि मुमुक्षुभिः ।
संनिवेशांशवैचित्र्यं यथा हेम्नोऽङ्गदादिता ॥ ११ ॥

आत्मनः तदतद्रूपा तथैव जगदादिता ।
कुचकोटरसंसुप्तं विस्मृत्य जननी सुतम् ॥ १२ ॥

यथा रोदिति पुत्रार्थं तथाऽऽत्मार्थं अयं जनः ।
अजरामरं आत्मानं अबुद्ध्वा परिरोदिति ॥ १३ ॥

हा हतोऽहं अनाथोऽहं नष्टोऽस्मीति वपुःक्षये ।
अनात्मन्यात्मतां अस्मिन् देहादौ दृश्यजालके ॥ १४ ॥

त्यक्त्वा सत्त्वं उपारूढो गूढः तिष्ठ यथासुखम् ।
सर्गात्मभिः विभुः स्पन्दैः क्रीडते बालवत् स्वयम् ॥ १५ ॥

संहारात्मकशक्त्याऽथ संहृत्यात्मनि तिष्ठति ।
अहो नु चित्रा मायेयं तात विश्वविमोहिनी ॥ १६ ॥

सर्वाङ्गप्रोतं अप्येतं यत् आत्मानं न पश्यति ।
इदं स्वयं इदं नेति बीजं तत् दुःखसन्ततेः ॥ १७ ॥

तस्मिन् साङ्ख्याग्निना दग्धे दुःखस्यावसरः कुतः ।
2 योगभूमिकाः ।
शास्त्रसज्जनसंपर्कैः प्रज्ञां आदौ विवर्धयेत् ॥ १८ ॥

प्रथमा भूमिकैषोक्ता योगस्य नवयोगिनः ।
विचारणा द्वितीया स्यात् तृतीयाऽसङ्गभावना ॥ १९ ॥

विलापिनी चतुर्थी स्यात् वासनाविलयात्मिका ।
शुद्धसंविन्मयानन्दरूपा भवति पञ्चमी ॥ २० ॥

अर्धसुप्तप्रबुद्धाभो जीवन्मुक्तोऽत्र तिष्ठति ।
स्वसंवेदनरूपा च षष्ठी भवति भूमिका ॥ २१ ॥

आनन्दैकघनाकारा सुषुप्तसदृशस्थितिः ।
तुर्यावस्थोपशान्ताऽथ मुक्तिरेव हि केवलम् ॥ २२ ॥

समता स्वच्छता सौम्या सप्तमी भूमिका भवेत् ।
तुर्यातीता तु याऽवस्था परा निर्वाणरूपिणी ॥ २३ ॥

सप्तमी सा परिप्रौढा विषयः सा न जीवताम् ।
पूर्वावस्थात्रयं त्वत्र जाग्रत् इत्येव संस्थितम् ॥ २४ ॥

चतुर्थी स्वप्न इत्युक्ता स्वप्नाभं यत्र वै जगत् ।
आनन्दैकघनीभावात् सुषुप्ताख्या तु पञ्चमी ॥ २५ ॥

असंवेदनरूपाऽथ षष्ठी तुर्यपदाभिधा ।
तुर्यातीतपदावस्था सप्तमी भूमिकोत्तमा ॥ २६ ॥

मनोवचोभिः अग्राह्या स्वप्रकाशपदात्मिका ।
प्रत्याहृतिवशात् अन्तः चेत्यं चेत् न विभावितम् ॥२७॥

मुक्त एवास्त्यसंदेहो महासमतया तया ।
यत् भोगसुखदुःखांशैः अपरामृष्टपूर्णधीः ॥ २८ ॥

आत्मारामो नरः तिष्ठेत् तत् मुक्तत्वं उदाहृतम् ।
इत्युक्त्वा दयया प्राह मनुः इक्ष्वाकवे पुनः ॥ २९ ॥

३ ब्रह्मतावाप्तिः ।

व्यवहार्युपशान्तो वा गृहस्थो वाऽथवा यतिः ।
सशरीरोऽशरीरो वा भवत्येवंमतिः पुमान् ॥ ३० ॥

अहंमत्यादिहीनश्च शुद्धो बुद्धोऽजरामरः ।
शान्तः समसमाभास इति मत्वा न शोचति ॥ ३१ ॥

बद्ध्वासनं अर्थो यः सेव्यते सुखयत्यसौ ।
यत् सुखाय तदेवाशु वस्तु दुःखाय नाशतः ॥ ३२ ॥

अविनाभावनिष्ठत्वं प्रसिद्धं सुखदुःखयोः ।
तनुशासनं अर्थो यः सेव्यते वा विवासनम् ॥ ३३ ॥

नासौ सुखायते नासौ नाशकाले च दुःखदः ।
क्षीणवासनया बुद्धया कर्म यत् क्रियतेऽनघ ॥ ३४ ॥

तत् दग्धबीजवत् भूयो नाङ्कुरं प्रविमुञ्चति ।
क्रियमाणा कृता कर्मतूलिका देहशाल्मलेः ॥ ३५ ॥

ज्ञानानिलसमुद्धूता प्रोड्डीय क्वापि गच्छति ।
सर्वैव हि कला जन्तोः अनभ्यासेन नश्यति ॥ ३६ ॥

एषा ज्ञानकला स्वन्तः सकृत् जाता दिने दिने ।
वृद्धिं एति बलादेव सुक्षेत्रन्युप्तबीजवत् ॥ ३७ ॥

यावत् विषयभोगाशा जीवाख्या तावत् आत्मनः ।
अविवेकेन संपन्ना साऽप्याशा हि न वस्तुतः ॥ ३८ ॥

विवेकवशतो याता क्षयं आशा यदा तदा ।
आत्मा जीवत्वं उत्सृज्य ब्रह्मतां एत्यनामयः ॥ ३९ ॥

चिन्मात्रत्वं प्रयातस्य तीर्णमृत्योः अचेतसः ।
यो भवेत् परमानन्दः केनासौ उपमीयते ॥ ४० ॥

एतत्स्वरूपं आसाद्य प्रकृतिः परिशाम्यति ।
अहंकृतेः विमोहस्य क्षयेणेयं विलीयते ॥ ४१ ॥

प्रकृतिः भावनानाम्नी, मोक्षः स्यात् एष एव सः ॥

4 जीवन्मुक्तस्थितिः ।

येन केनचित् आच्छन्नो येन केनचित् आशितः ॥

यत्र क्वचन शायी च स सम्राडिव राजते ।
वर्णधर्माश्रमाचारशास्त्रयन्त्रणयोज्झितः ॥ ४३ ॥

गम्भीरश्च प्रसन्नश्च रमते स्वात्मनाऽऽत्मनि ।
सर्वकर्मफलत्यागी नित्यतृप्तो निराश्रयः ॥ ४४ ॥

न पुण्येन न पापेन नेतरेण च लिप्यते ।
स्फटिकः प्रतिबिम्बेन न याति रञ्जनं यथा ॥ ४५ ॥

तज्ज्ञः कर्मफलेनान्तः तथा नायाति रञ्जनम् ।
निःस्तोत्रो निर्विकारश्च पूज्यपूजाविवर्जितः ॥ ४६ ॥

संयुक्तश्च वियुक्तश्च सर्वाचारनयक्रमैः ।
तस्मात् नोद्विजते लोको लोकात् नोद्विजते च सः ॥

तनुं त्यजतु वा तीर्थे श्वपचस्य गृहेऽपि वा ।
मा कदाचन वा राजन् वर्तमानेऽपि वा क्षणे ॥ ४८ ॥

स पूजनीयः स स्तुत्यो नमस्कार्यः स यत्नतः ।
स निरीक्ष्योऽभिवाद्यश्च विभूतिविभवैषिणा ॥ ४९ ॥

यज्ञतीर्थतपोदानैः न तदासाद्यते पदम् ।
सतां आत्मविदां भक्त्या सेवनेन तु लभ्यते ॥ ५० ॥

एवं उक्त्वा स भगवान् मनुः ब्राह्मं गृहं ययौ ।
इक्ष्वाकुरपि तां दृष्टिं अवष्टभ्य स्थिरोऽभवत् ॥ ५१ ॥

इति श्रीवासिष्ठसंग्रहे इक्ष्वाकूपाख्यानं नाम
त्रिंशः सर्गः ॥

---

॥ एकत्रिंशः सर्गः ॥

---

## ॥ भूमिकाजयः ॥

### १　चित्तनाशः ।

श्रीराम उवाच—

एवं स्थिते हि भगवन् जीवन्मुक्तस्य सन्मतेः ।
अपूर्वातिशयः कोऽसौ भवत्यात्मविदां वर ॥ १ ॥

वसिष्ठ उवाच—

नित्यतृप्तः प्रशान्तात्मा स आत्मन्येव तिष्ठति ।
मन्त्रतन्त्रतपःसिद्धैः संप्राप्तं अणिमाद्यपि ॥ २ ॥

कृतं आकाशयानादि का तत्र स्यात् अपूर्वता ।
यत्नात् तत् साधितं तैस्तु नेतरेणात्मदर्शिना ॥ ३ ॥

एष एव विशेषोऽस्य न समो मूढबुद्धिभिः ।
सर्वत्रास्थापरित्यागात् नीरागं अमलं मनः ॥ ४ ॥

यथा सत्त्वं उपेक्ष्य स्वं शनैः विप्रो दुरीहया ।
अङ्गीकरोति शूद्रत्वं तथा जीवत्वं ईश्वरः ॥ ५ ॥

अकारणं उपायान्ति सर्वे जीवाः परात् पदात् ।
पश्चात् तेषां स्वकर्माणि कारणं सुखदुःखयोः ॥ ६ ॥

आत्माज्ञानात् समुत्पन्नः संकल्पः कर्मकारणम् ।
संकल्पित्वं हि बन्धस्य कारणं, तत् परित्यज ॥ ७ ॥

निःसंकल्पस्तु मोक्षस्य, तदभ्यासं धिया कुरु ।
मनसि ग्रथिताः पाशाः तृष्णामोहमदादयः ॥ ८ ॥

मनसैव मनः च्छिन्धि संसारभ्रान्तिशान्तये ।
क्षालयन्ति मलेनैव मलं क्षालककोविदाः ॥ ९ ॥

जीवस्य त्रीणि रूपाणि स्थूलं सूक्ष्मं तथा परम् ।
पाणिपादमयो योऽयं देहो भोगाय वर्तते ॥ १० ॥

भोगार्थं एतत् जीवस्य स्थूलं रूपं इहास्थितम् ।
स्वसंकल्पमयाकारं यावत्संसारभावि यत् ॥ ११ ॥

चित्तं तत् विद्धि सूक्ष्माख्यं रूपं तस्यातिवाहिकम् ।
आद्यन्तरहितं सत्यं चिन्मात्रं निर्विकल्पकम् ॥ १२ ॥

यत् तव विद्धि परं रूपं शुद्धं जीवस्य राघव ।
पूर्वे द्वे संपरित्यज्य परे बद्धपदो भव ॥ १३ ॥

या स्वच्छा समता शान्ता जीवन्मुक्तव्यवस्थितिः ।
साक्ष्यवस्था व्यवहृतौ तुर्या सा परिकीर्त्यते ॥ १४ ॥

नैतत् जाग्रत् न च स्वप्नः संकल्पानां असंभवात् ।
नैतत् सुषुप्तभावोऽपि जडतायाः अभावतः ॥ १५ ॥

जाग्रत्स्वप्नसुषुप्ताख्यं त्रयं रूपं हि चेतसः ।
शान्तं घोरं च मूढं च व्यात्म चित्तं इह स्थितम् ॥

घोरं जाग्रन्मयं चित्तं शान्तं स्वप्नमयं स्थितम् ।
मूढं सुषुप्तभावस्थं त्रिभिः हीनं मृतं भवेत् ॥ १७ ॥

तच्च तुर्यं मृतं चित्तं सत्त्वं एकं स्थितं समम् ।
तदेव योगिनः सर्वे यत्नात् संपादयन्ति हि ॥ १८ ॥

चित्तसत्ता परं दुःखं चित्तनाशः परं सुखम् ।
सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ॥ १९ ॥

शान्त एव चिदाकाशे ब्रह्मेति शब्दिते परे ।
केचित् निर्णीय शून्यत्वं केचित् विज्ञानमात्रताम् ॥ २० ॥

केचित् ईश्वररूपत्वं विवदन्ते परस्परम् ।
सर्वमेव परित्यज्य महामौनी भवानघ ॥ २१ ॥

निर्वाणवान् निर्मननः क्षीणचित्तः प्रशान्तधीः ।
अन्तः सर्वपरित्यागी बहिः कुरु यथाऽऽगतम् ॥ २२ ॥

2 भूमिकात्रयारोहणम् ।

श्रीराम उवाच —

सप्तानां योगभूमीनां अभ्यासः क्रियते कथम् ।

वसिष्ठ उवाच —

प्रवृत्तश्च निवृत्तश्च भवति द्विविधः पुमान् ॥ २३ ॥

कियत् तत् नाम निर्वाणं वरं संसृतिरेव मे ।
इति निर्णीय कर्ता यः स प्रवृत्त उदाहृतः ॥ २४ ॥

असारा बत संसारव्यवस्थाऽलं ममैतया ।
इति निश्चयवान् योऽन्तः स निवृत्त इति स्मृतः ॥ २५ ॥

कथं विरागवान् भूत्वा संसाराब्धिं तराम्यहम् ।
एवं विचारवान् यः स्यात् संसारोत्तरणं प्रति ॥ २६ ॥

स भूमिकावान् इत्युक्तः शेषः स्वार्थ इति स्मृतः ।
क्रियासूदाररूपासु क्रमते मोदते यदा ॥ २७ ॥

ग्राम्यासु जडचेष्टासु विरागमुपयाति च ।
बिभेति सततं पापात् न च भोगमपेक्षते ॥ २८ ॥

देशकालोपपन्नानि वचनान्यभिभाषते ।
तदाऽसौ प्रथमां प्राप्तः शुभेच्छाह्वयभूमिकाम् ॥ २९ ॥

विचारणेति संप्रोक्तां द्वितीयां भूमिकां गतः ।
श्रुतिस्मृतिसदाचारधारणाध्यानकर्मणाम् ॥ ३० ॥

आश्रित्य पण्डितश्रेष्ठान् विभागज्ञो भवत्यतः ।
दम्भादिहीनः शास्त्रेषु गुरुसज्जनसेवया ॥ ३१ ॥

स रहस्यं अशेषेण यथावत् अधिगच्छति ।
ततोऽसंसक्तिनाम्नीं सः तृतीयां प्राप्य भूमिकाम् ॥ ३२ ॥

तापसाश्रमविश्रामैः अध्यात्मकथनक्रमैः ।
चित्तोपशमशोभाढ्यः कालं नयति नीतिमान् ॥ ३३ ॥

अभ्यासात् साधु शास्त्राणां करणात् पुण्यकर्मणाम् ।
यथावदेव तस्येयं वस्तुदृष्टिः प्रसीदति ॥ ३४ ॥

द्विविधोऽयं असंसङ्गः सामान्यः श्रेष्ठ एव च ।
नाहं कर्ता न भोक्ता च न बाध्यो न च बाधकः ॥

प्राक्कर्मनिर्मितं सर्वं ईश्वराधीनमेव वा ।
सुखं वा यदि वा दुःखं कैवात्र मम कर्तृता ॥ ३६ ॥

इत्यसज्जनं अर्थेषु सामान्योऽसौ असङ्गमः ।
अनेनाभ्यासयोगेन संयोगेन महात्मनाम् ॥ ३७ ॥

दुर्जनानां वियोगेन प्रयोगेणात्मसंविदाम् ।
संसाराब्धेः परे पारे सारे परमकारणे ॥ ३८ ॥

यत् मौनं आसनं शान्तं तत् श्रेष्ठासङ्ग उच्यते ।
श्रेष्ठाऽसंसङ्गता ह्येषा तृतीया भूमिका मता ॥ ३९ ॥

3 उत्तरभूमिकाः ।

श्रीराम उवाच —

मूढस्याप्राप्तयोगस्य कथं उत्तरणं भवेत् ।
आरूढस्य मृतस्याथ कीदृशी भगवन् गतिः ॥ ४० ॥

वसिष्ठ उवाच —

मूढस्यारूढदोषस्य तावत् संसृतिः आवृता ।
यावत् जन्मान्तरशतैः नोदिता प्रथमाऽपि भूः ॥ ४१ ॥

वैराग्येऽभ्युदिते जन्तोः अवश्यं भूमिकोदयः ।
ततो नश्यति संसारः इति शास्त्रार्थसंग्रहः ॥ ४२ ॥

योगभूमिकयोत्क्रान्तजीवितस्य शरीरिणः ।
भूमिकांशानुसारेण क्षीयते पूर्वदुष्कृतम् ॥ ४३ ॥

पुण्यलोकेषु सञ्चारात् सुकृतेऽपि क्षयं गते ।
शुचीनां श्रीमतां गेहे जायते योगवासितः ॥ ४४ ॥

ततः परिपतत्युच्चैः उत्तरं भूमिकात्रयम् ।
भूमिकात्रितयं त्वेतत् राम जाग्रदिति स्मृतम् ॥ ४५ ॥

प्रथमायामङ्कुरितं द्वितीयायां विकासितम् ।
फलीभूतं तृतीयायां आर्यत्वं योगिनो भवेत् ॥ ४६ ॥

कर्तव्यं आचरन् कामं अकर्तव्यमनाचरन् ।
तिष्ठति प्राकृताचारो यः स आर्य इति स्मृतः ॥ ४७ ॥

यथाचारं यथाशास्त्रं यथाचित्तं यथास्थितम् ।
व्यवहारमुपादत्ते यः स आर्य इति स्मृतः ॥ ४८ ॥

भूमिकात्रितयाभ्यासात् अज्ञाने क्षयमागते ।
अद्वैते स्थैर्यं आयाते द्वैते प्रशमं आगते ॥ ४९ ॥

पश्यति स्वप्नवत् लोकं चतुर्थीं भूमिकां गतः ।
पञ्चमीं भूमिकां एत्य तिष्ठन् अद्वैतमात्रके ॥ ५० ॥

शान्ताशेषविशेषांशः निद्रालुरिव लक्ष्यते ।
कुर्वन् अभ्यासं एतस्यां षष्ठीं पतति भूमिकाम् ॥ ५१ ॥

यत्र तिष्ठति निर्ग्रन्थिः जीवन्मुक्तोऽविभावनः ।
अन्तःशून्यो बहिःशून्यः शून्यकुम्भ इवाम्बरे ॥ ५२ ॥

अन्तःपूर्णो बहिःपूर्णः पूर्णकुम्भ इवार्णवे ।
षष्ठ्यां भूम्यां असौ स्थित्वा सप्तमीं भूमिं आप्नुयात् ॥

विदेहमुक्तता प्रोक्ता सा सीमा भवभूमिषु ।
कैश्चित् सा शिव इत्युक्ता कैश्चित् ब्रह्मेत्युदाहृता ॥ ५४ ॥

नानाभेदैः यथाबुद्धि कैश्चिदप्यन्यथाऽन्यथा ।
नित्यं अव्यपदेश्याऽपि कथंचित् व्यपदिश्यते ॥ ५५ ॥

4 ब्रह्मैकभावनम् ।

अस्त्यत्यन्तमदोन्मत्ता करिणीच्छासमाह्वया ।
सा चेत् न हन्यते नूनं अनन्तानर्थकारिणी ॥ ५६ ॥

भूमिकासु च सर्वासु सञ्चारो नैव साध्यते ।
वासनेहा मनः चित्तं सङ्कल्पो भावनं स्पृहा ॥ ५७ ॥

इत्यादीनि च नामानि तस्या एव भवन्ति हि ।
धैर्यनाम्ना वरास्त्रेण चैतां सर्वात्मना जयेत् ॥ ५८ ॥

इदं मेऽस्त्विति विज्ञानं यत् तत् कल्पनं उच्यते ।
अर्थस्याभावनं यत् तत् कल्पनात्याग उच्यते ॥ ५९ ॥

स्मरणं विद्धि सङ्कल्पं शिवं अस्मरणं विदुः ।
सर्वमेवाशु विस्मृत्य मूढवत् तिष्ठ काष्ठवत् ॥ ६० ॥

ऊर्ध्वबाहुः विरौम्येवं न च कश्चित् शृणोति तत् ।
असंकल्पः परं श्रेयः स किं अन्तः न भाव्यते ॥ ६१ ॥

तूष्णीं अवस्थितेनैव परमं प्राप्यते पदम् ।
परमं यत्र साम्राज्यं अपि राम तृणायते ॥ ६२ ॥

बहुनाऽत्र किं उक्तेन संक्षेपात् इदं उच्यते ।
संकल्पनं परो बन्धः तदभावो विमुक्तता ॥ ६३ ॥

अवेदनं विदुः योगं चित्तक्षयं अकृत्रिमम् ।
योगस्थः कुरु कर्माणि विकर्माणि च मा कुरु ॥ ६४ ॥

अकर्मनिरतो मा भूः बन्धसंभवशङ्कया ।
शिवं सर्वगतं शान्तं बोधात्मकं अजं शुभम् ।
तदेकभावनं राम कर्मत्याग इति स्मृतः ॥ ६५ ॥

इति श्रीवासिष्ठसंग्रहे भूमिकाजयो नाम
एकत्रिंशः सर्गः ॥

---

## ॥ द्वात्रिंशः सर्गः ॥

---

## ॥ ग्रन्थोपसंहारः ॥

### 1　भरद्वाजप्रबोधनम् ।

वाल्मीकिरुवाच —

ज्ञानसारं वसिष्ठोक्तमिदं आकर्ण्य राघवः ।
मुहूर्तं आसीत् उद्बुद्धः चैतन्यानन्दसागरः ॥ १ ॥

महासामान्यरूपत्वात् चिद्व्यापकतया स्थितः
न किंचित् ऊचे संपन्नः शिवे परिणतः पदे ॥ २ ॥

भरद्वाज उवाच —

अहो खलु महाश्चर्यं रामः प्राप्तो महत् पदम् ।
कथं एतादृशी प्राप्तिः अस्माकं मुनिनायक ॥ ३ ॥

दुष्पारश्च भवाम्भोधिः मया च तीर्यते कथम् ।

वाल्मीकिरुवाच —

अशेषं रामवृत्तान्तः आदितो यो निरूपितः ॥ ४ ॥

तं विचार्य धिया सम्यक् परामृश स्वयं पुनः ।
अविद्याया जगत् जातं नास्ति सत्यं इहाण्वपि ॥ ५ ॥

विवेचयन्ति विबुधाः विवदन्त्यविवेकिनः ।
नास्ति भिन्नं चितः किञ्चित् स्वप्नवृत्तं इदं जगत् ॥ ६ ॥

अविद्यायोनयो भेदाः सर्वेऽमी बुद्बुदा इव ।
क्षणं उद्भूय गच्छन्ति ज्ञानैकजलधौ लयम् ॥ ७ ॥

साकारं भज तावत् त्वं यावत सत्त्वं प्रसीदति ।
निराकारे परे तत्त्वे ततः स्थितिः अकृत्रिमा ॥ ८ ॥

कृतं पुरुषकारेण केवलेन च कर्मणा ।
महेशानुग्रहादेव प्राप्तव्यं प्राप्यते नरैः ॥ ९ ॥

नाभिजात्यं न चारित्रं न नयो न च विक्रमः ।
बलवन्ति पुराणानि नूनं कर्माणि केवलम् ॥ १० ॥

न लुम्पति ललाटस्थां ईश्वरोऽप्यक्षरावलिम् ।
बोधं पुण्यपराधीनं लभते बहुजन्मभिः ॥ ११ ॥

अनुमीयेत धीरेषु जीवन्मुक्तेषु कार्यतः ।
त्यज शोकं अमङ्गल्यं मङ्गलानि विचिन्तय ॥ १२ ॥

अखिन्नं क्षणं आसीनः पश्य संसारजाटकम् ।
चिदानन्दघनं स्वच्छं आत्मानं च विभावय ॥ १३ ॥

एवं स्थास्यसि नित्यं चेत् तीर्णोऽसि भवसागरात् ।

2 श्रीरामनिर्वृतिः ।

भरद्वाज उवाच—

रामः प्राप्तः परं योगं स्वात्मनाऽऽत्मनि निष्ठितः ॥
कथं वसिष्ठदेवेन व्यवहारपरः कृतः ।

वाल्मीकिरुवाच —

वसिष्ठः प्रोक्तवान् रामं विश्वामित्रेण चोदितः ॥ १५ ॥
"राम राम महाबाहो महापुरुष चिन्मय ।
नायं विश्रान्तिकालो हि लोकानन्दकरो भव ॥ १६ ॥
यावत् लोकपरामर्शो निरूढो नास्ति योगिनः ।
तावत् रूढसमाधित्वं न भवत्येव निर्मलम् ॥ १७ ॥
तस्मात् राज्यादिकार्याणि निर्वर्तय यथाक्रमम् ।
देवकार्यं तथा कृत्वा ततः त्यक्त्वा सुखी भव" ॥ १८ ॥
एवं उक्तो वसिष्ठेन रामो दाशरथिः तदा ।
सर्वैषणाविनिर्मुक्तो विनयादिदं अब्रवीत् ॥ १९ ॥
"विधिर्वा मे निषेधो वा त्वत्प्रसादात् न विद्यते ।
एवं सत्यपि वाक्यं ते करणीयं मया सदा ॥ २० ॥

शेयर्स आदि सामान्य रहेंगे । भाग्यांक १-२-६-७ है ।

## यूनिटों का मूल्य

बम्बई, १४ अक्टूबर (प्रेस ट्र.) । यूनिट ट्रस्ट आफ इंडिया की यूनिट योजना १९६४ के अन्तर्गत यूनिटों के विक्रय और पुनः क्रय मूल्य १५ अक्टूबर के लिए क्रमशः १३.१० रुपये और १२.३० रुपये पर अपरिवर्तित रहे ।

संयुक्त बीमा योजना १९७१ के अन्तर्गत यूनिटों के विक्रय और पुनः क्रय मूल्य क्रमशः ११.६० और ११.२० रुपये पर अपरिवर्तित रहे ।

दातव्य और धर्मादा सोसाइटी योजना १९८१ के अंतर्गत विक्रय और क्रय मूल्य क्रमशः १०५.०० और १००.०० रुपये पर अपरिवर्तित रहे । आयकर यूनिट योजना १९८२ के अन्तर्गत यूनिटों का पुनः क्रय मूल्य १०० रुपये पर स्थिर रहा ।

## द० अफ्रीका के बारे में अमरीकी नीति की भारत द्वारा आलोचना

राष्ट्रसंघ, १४ अक्टूबर (प्रेस ट्र.) । दक्षिण अफ्रीका में "रचनात्मक कार्रवाई की अमरीकी नीति को कल रात भारत ने ठुकरा दिया और यह घोषणा की कि इससे केवल जातिवादी प्रशासन को विश्व समुदाय की उपेक्षा करने का साहस होगा ।

राष्ट्रसंघ की महासभा की समिति में भाषण करते हुए भारतीय प्रतिनिधि श्री एम. एस. रामचन्द्रन ने कहा कि हमें इन नीतियों में विश्वास नहीं, क्योंकि इनकी बदौलत रंगभेद नीति को जारी रखने में ...